# ARDSCHUNA'S
# Reise zu Indra's Himmel,

nebst anderen Episoden

des

MAHA - BHARATA.



Aus der Sanskrita - Sprache im Urversmaafse übersetzt

von

*Franz Bopp.*



॥ वैशम्पायन उवाच ॥

गतेषु लोकपालेषु पार्थः शत्रुनिवर्हणः ।
चिन्तयामास राजेन्द्र देवराजरथागमं ॥१॥
ततश्चिन्तयमानस्य गुडाकेशस्य धीमतः ।
रथो मातलिसंयुक्त आजगाम महाप्रभः ॥२॥
नभो वितिमिरं कुर्वन् जलदान् पाटयन्निव ।
दिशः संपूरयन् नादैर्महामेघरवोपमैः ॥३॥
असयः शक्तयो भीमा गदाश्चोग्रप्रदर्शनाः ।
दिव्यप्रभावाः प्रासाश्च विद्युतश्च महाप्रभाः ॥४॥
तथैवाशनयस्तत्र चक्रयुक्ता हुला गुडाः ।
वायुस्फोटाः सनिर्घाता महामेघस्वनास्तथा ॥५॥
तत्र नागा महाकाया ज्वलितास्याः सुदारुणाः ।
सिताभ्रकूटप्रतिमाः संहताश्च तथोपलाः ॥६॥
दश वाजिसहस्राणि हरीणां वातरंहसां ।
वहन्ति ये नेत्रमुषं दिव्यं मायामयं रथं ॥७॥

तत्रापश्यन्महानीलं वैजयन्तं महाप्रभं ।
ध्वजमिन्दीवरश्यामं वंशं कनकभूषणं ॥८॥
तस्मिन् रथे स्थितं सूतं तप्तं हेमविभूषितं ।
दृष्ट्वा पार्थो महाबाहुर्देवमेवान्वतर्कयत् ॥९॥
तथा तर्कयतस्तस्य फाल्गुनस्याथ मातलिः ।
संनतः प्रश्रितो भूत्वा वाक्यमर्जुनमब्रवीत् ॥१०॥
भो भो शक्रात्मज श्रीमन् शक्रस्त्वां द्रष्टुमिच्छति ।
आरोहतु भवान् शीघ्रं रथमिन्द्रस्य संमतं ॥११॥
आह माममरश्रेष्ठः पिता तव शतक्रतुः ।
कुन्तीसुतमिह प्राप्तं पश्यन्तु त्रिदशालयाः ॥१२॥
एष शक्रः परिवृतो देवैर्ऋषिगणैस्तथा ।
गन्धर्वैरप्सरोभिश्च त्वां दिदृक्षुः प्रतीक्षते ॥१३॥
अस्माल्लोकाद्देवलोकं पाकशासनशासनात् ।
आरोहस्व मया सार्द्धं लब्धास्त्रः पुनरेष्यसि ॥१४॥

॥अर्जुन उवाच॥

मातले गच्छ शीघ्रं त्वमारोहस्व रथोत्तमं ।
राजसूयाश्वमेधानां शतैरपि सुदुर्लभं ॥१५॥
पार्थिवैः सुमहाभागैर्यज्वभिर्भूरिदक्षिणैः ।
देवतैर्वा समारोढुं दानवैर्वा रथोत्तमं ॥१६॥

नातप्ततपसा शक्य एष दिव्यो महारथः ।
द्रष्टुं वाप्यथवा स्प्रष्टुमारोढुं कुत एव वा ॥१७॥
त्वयि प्रतिष्ठिते साधो रथस्थे स्थिरवाजिनि ।
पश्चादहमथारोक्ष्ये सुकृती सत्पथं यथा ॥१८॥

॥वैशम्पायन उवाच॥

तस्य तद्वचनं श्रुत्वा मातलिः शक्रसारथिः ।
आरुरोह रथं शीघ्रं हयान् येमे च रश्मिभिः ॥१९॥
ततोऽर्जुनो हृष्टमना गङ्गायामाप्लुतः शुचिः ।
जजाप जप्यं कौन्तेयो विधिवत् कुरुनन्दनः ॥२०॥
ततः पितॄन् यथान्यायं तर्पयित्वा यथाविधि ।
मन्दरं शैलराजं तमाप्रष्टुमुपचक्रमे ॥२१॥
साधूनां धर्मशीलानां मुनीनां पुण्यकर्मणां ।
त्वं सदा संश्रयः शैल स्वर्गमार्गाभिकाङ्क्षिणां ॥२२॥
त्वत्प्रसादात् सदा शैल ब्राह्मणाः क्षत्रिया विशः ।
स्वर्गं प्राप्ताश्चरन्ति स्म देवैः सह गतव्यथाः ॥२३॥
अद्रिराज महाशैल मुनिसंश्रय तीर्थवत् ।
गच्छाम्यामन्त्रयित्वा त्वां सुखमस्म्युषितस्त्वयि ॥२४॥
तव सानूनि कुञ्जाश्च नद्याः प्रस्रवणानि च ।
तीर्थानि च सुपुण्यानि मया दृष्टान्यनेकशः ॥२५॥

फलानि च सुगन्धीनि भक्षितानि ततस्ततः ।
सुसुगन्धाश्च वार्योघास्त्वच्छरीरविनिःसृताः ॥२६॥
अमृतस्वादनीया मे पीताः प्रस्रवणोदकाः ।
शिशुर्यथा पितुरङ्के सुसुखं वर्तते ऽनघ ॥२७॥
तथा तवाङ्के ललितं शैलराज मया प्रभो ।
अप्सरोगणसंकीर्णे ब्रह्मघोषानुनादिते ॥२८॥
सुखमस्म्युषितः शैल तव सानुषु नित्यदा ।
एवमुक्त्वार्जुनः शैलमामन्त्र्य परवीरहा ॥२९॥
आरुरोह रथं दिव्यं द्योतयन्निव भास्करः ।
स तेनादित्यरूपेण दिव्येनाद्भुतकर्मणा ॥३०॥
ऊर्द्ध्वमाचक्रमे धीमान् प्रहृष्टः कुरुनन्दनः ।
सो ऽदर्शनपथं यातो मर्त्यानां भूमिचारिणां ॥३१॥
ददर्शाद्भुतरूपाणि विमानानि सहस्रशः ।
न तत्र सूर्यः सोमो वा द्योतते न च पावकः ॥३२॥
स्वयैव प्रभया तत्र द्योतन्ते पुण्यलब्धया ।
तारारूपाणि यानीह दृश्यन्ते द्युतिमन्ति वै ॥३३॥
दीपवद्विप्रकृष्टत्वात् तनूनि विमहान्त्यपि ।
तानि तत्र प्रभावन्ति रूपवन्ति च पाण्डवः ॥३४॥
ददर्श स्वेषु धिष्ण्येषु दीप्तिमन्ति स्वयार्चिषा ।
तत्र राजर्षयः सिद्धा वीराश्च निहता युधि ॥३५॥

तपसा च जितस्वर्गाः संपेतुः शतसङ्घशः ।
गन्धर्वाणां सहस्राणि सूर्यज्वलिततेजसां ॥३६॥
गुह्यकानामृषीणां च तथैवाप्सरसां गणान् ।
लोकानात्मप्रभान् पश्यन् फाल्गुनो विस्मयान्वितः ॥३७॥
पप्रच्छ मातलिं प्रीत्या स चाप्येनमुवाच ह ।
एते सुकृतिनः पार्थ स्वेषु धिष्ण्येष्ववस्थिताः ॥३८॥
यान् दृष्टवानसि विभो तारारूपाणि भूतले ।
ततो ऽपश्यत् स्थितं द्वारि शुभं विजयिनं गजं ॥३९॥
ऐरावतं चतुर्दन्तं कैलाशमिव शृङ्गिणं ।
स सिद्धमार्गमाक्रम्य कुरुपाण्डवसत्तमः ॥४०॥
व्यरोचत यथा पूर्वं मान्धाता पार्थिवोत्तमः ।
अभिचक्राम लोकान् स राज्ञां राजीवलोचनः ॥४१॥
एवं स संक्रमंस्तत्र स्वर्गलोके महायशाः ।
ततो ददर्श शक्रस्य पुरीं ताममरावतीं ॥४२॥
॥इत्यिन्द्रलोकागमने प्रथमः सर्गः ॥१॥



## ॥वैशम्पायन उवाच॥

ददर्श स पुरीं रम्यां सिद्धचारणसेवितां ।
सर्वैस्तु कुसुमैः पुण्यैः पादपैरुपशोभितां ॥१॥
तत्र सौगन्धिकानां च पुष्पाणां पुण्यगन्धिनां ।
उद्वीज्यमानो मिश्रेण वायुना पुण्यगन्धिना ॥२॥
नन्दनं च वनं पुण्यमप्सरोगणसेवितं ।
ददर्श दिव्यकुसुमैराह्वयद्भिरिव द्रुमैः ॥३॥
नातप्ततपसा शक्यो द्रष्टुं नानाहिताग्निना ।
स लोकः पुण्यकर्तॄणां नापि युद्धे पराङ्मुखैः ॥४॥
नायज्वभिर्नाव्रतिकैर्न वेदश्रुतिवर्जितैः ।
नानाप्लुताङ्गैस्तीर्थेषु यज्ञदानबहिष्कृतैः ॥५॥
नापि यज्ञहनैः क्षुद्रैर्द्रष्टुशक्यः कथंचन ।
पानपैर्गुरुतल्पैश्च मांसादैर्वा दुरात्मभिः ॥६॥
स तद्दिव्यं वनं पश्यन् दिव्यगीतविनादितं ।
प्रविवेश महाबाहुः शक्रस्य दयितां पुरीं ॥७॥

तत्र देवविमानानि कामगानि सहस्रशः ।
संस्थितान्यभियातानि ददर्शायुतशस्तथा ॥८॥
संस्तूयमानो गन्धर्वैरप्सरोभिश्च पाण्डवः ।
पुष्पगन्धवहैः पुण्यैर्वायुभिश्चानुवीजितः ॥९॥
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
हृष्टाः संपूजयामासुः पार्थमक्लिष्टकारिणं ॥१०॥
आशीर्वादैः स्तूयमानो दिव्यवादित्रनिस्वनैः ।
प्रतिपेदे महाबाहुः शङ्खदुन्दुभिनादितं ॥११॥
नक्षत्रमार्गं विपुलं सुरवीथीति विश्रुतं ।
इन्द्राज्ञया ययौ पार्थः स्तूयमानः समन्ततः ॥१२॥
तत्र साध्यास्तथा विश्वे मरुतो ऽथाश्विनौ तथा ।
आदित्या वसवो रुद्रास्तथा ब्रह्मर्षयो ऽमलाः ॥१३॥
राजर्षयश्च बहवो दिलीपप्रमुखा नृपाः ।
तुम्बुरुर्नारदश्चैव गन्धर्वौ च हहा हुहुः ॥१४॥
तान् सर्वान् स समागम्य विधिवत् कुरुनन्दनः ।
ततो ऽपश्यन्महाबाहुं शतक्रतुमरिंदमं ॥१५॥
ततः पार्थो महाबाहुरवतीर्य रथोत्तमात् ।
ददर्श साक्षाद्देवेन्द्रं पितरं पाकशासनं ॥१६॥
पाण्डुरेणातपत्रेण हेमदण्डेन चारुणा ।
दिव्यगन्धाधिवासेन व्यजनेन विधूयता ॥१७॥

विश्वावसुप्रभृतिभिर्गन्धर्वैः स्तुतिवन्दिभिः ।
स्तूयमानं द्विजाग्र्यैश्च ऋग्यजुःसामवेदिभिः ॥१८॥
ततो ऽभिगम्य कौन्तेयः शिरसाभ्यनमद्बली ।
स चैनं वृत्तपीनाभ्यां बाहुभ्यां प्रत्यगृह्णत ॥१९॥
ततः शक्रासने पुण्ये देवर्षिगणपूजिते ।
शक्रः पाणौ गृहीत्वैनमुपावेशयदन्तिके ॥२०॥
मूर्ध्नि चैनमुपाघ्राय देवेन्द्रः परवीरहा ।
अङ्कमारोपयामास प्रश्रयावनतं तदा ॥२१॥
सहस्राक्षनियोगात् स पार्थः शक्रासनं गतः ।
अध्यक्रमदमेयात्मा द्वितीय इव वासवः ॥२२॥
ततः प्रेम्णा वृत्रशत्रुरर्जुनस्य शुभं मुखं ।
पस्पर्श पुण्यगन्धेन करेण परिसान्त्वयन् ॥२३॥
प्रमार्जमानः शनकैर्बाहू चास्यायतौ शुभौ ।
ज्याशरक्षेपकठिनौ स्तम्भाविव हिरण्मयौ ॥२४॥
वज्रग्रहणचिह्नेन करेण परिसान्त्वयन् ।
मुहुर्मुहुर्वज्रधरो बाहू चास्फोटयच्छनैः ॥२५॥
स्मयन्निव गुडाकेशं प्रेक्षमाणः सहस्रदृक् ।
हर्षेणोत्फुल्लनयनो न चातृप्यत वृत्रहा ॥२६॥
एकासनोपविष्टौ तौ शोभयांचक्रतुः सभां ।
सूर्यचन्द्रमसौ व्योम चतुर्दश्यामिवोदितौ ॥२७॥

तत्र स्म गाथा गायन्ति साम्ना परमवल्गुना ।
गन्धर्वास्तुम्बुरुश्रेष्ठाः कुशला गीतसामसु ॥२८॥
घृताची मेनका रम्भा पूर्वचित्तिः स्वयंप्रभा ।
उर्वशी मिश्रकेशी च दण्डगौरी वरूथिनी ॥२९॥
गोपाली सहजन्या च कुम्भयोनिः प्रजागरा ।
चित्रसेना चित्रलेखा सहा च मधुरस्वना ॥३०॥
एताश्चान्याश्च ननृतुस्तत्र तत्र शुचिस्मिताः ।
चित्तप्रसादने युक्ताः सिद्धानां पद्मलोचनाः ॥३१॥
महाकटितटश्रोण्यः कम्पमानैः पयोधरैः ।
कटाक्षहावमाधुर्यैश्चेतोबुद्धिमनोहरैः ॥३२॥
॥इत्यिन्द्रलोकागमने द्वितीयः सर्गः ॥२॥



॥वैशम्पायन उवाच॥

ततो देवाः सगन्धर्वाः समादायार्घ्यमुत्तमं ।
शक्रस्य मतमाज्ञाय पार्थमानर्चुरञ्जसा ॥१॥
पाद्यमाचमनीयं च प्रतिग्राह्य नृपात्मजं ।
प्रवेशयामासुरथो पुरंदरनिवेशनं ॥२॥
एवं संपूजितो जिष्णुरुवास भवने पितुः ।
उपशिक्षन् महास्त्राणि ससंहाराणि पाण्डवः ॥३॥
शक्रस्य हस्तादयितं वज्रमस्त्रं दुरासदं ।
अशनीश्च महानादा मेघबर्हिणलक्षनाः ॥४॥
गृहीतास्त्रस्तु कौन्तेयो भ्रातॄन् सस्मार पाण्डवः ।
पुरंदरनियोगाच्च पञ्चाब्दानवसत् सुखी ॥५॥
ततः शक्रो ऽब्रवीत् पार्थं कृतार्थं काल आगते ।
नृत्यं गीतं च कौन्तेय चित्रसेनादवाप्नुहि ॥६॥
वादित्रं देवविहितं नृलोके यन्न विद्यते ।
तदर्जयस्व कौन्तेय श्रेयो वै ते भविष्यति ॥७॥

सखायं प्रददौ चास्य चित्रसेनं पुरंदरः
स तेन सह संगम्य रेमे पार्थो निरामयः ॥८॥
गीतवादित्रनृत्यानि भूय एवादिदेश ह ।
तथापि नालभच्छर्म तरस्वी द्यूतकारितं ।
दुःशासनवधामर्षी शकुनेः सौबलस्य च ॥९॥
ततस्तेनातुलां प्रीतिमुपगम्य क्वचित् क्वचित् ।
गान्धर्वमतुलं नित्यं वादित्रं चोपलब्धवान् ॥१०॥
स शिक्षितो नृत्यगुणाननेकान् वादित्रगीतार्थगुणांश्च सर्वान् ।
न शर्म लेभे परवीरहन्ता भ्रातॄन् स्मरन् मातरं चैव कुन्तीं ॥११॥



## ॥वैशम्पायन उवाच॥

आदाविवाय तं शक्रश्चित्रसेनं रहो ऽब्रवीत् ।
पार्थस्य चक्षुरुर्वश्यां सक्तं विज्ञाय वासवः ॥१॥
गन्धर्वराज गच्छाद्य प्रहितो ऽप्सरसां वरां ।
उर्वशी पुरुषव्याघ्रं सोपतिष्ठतु फाल्गुनं ॥२॥
यथार्चितो गृहीतास्त्रो विद्यावान् मन्नियोगतः ।
तथा त्वया विधातव्यः स्त्रीषु सङ्गविशारद ॥३॥
एवमुक्तस्तथेत्युक्त्वा सो ऽनुज्ञां प्राप्य वासवात् ।
गन्धर्वराजो ऽप्सरसमभ्यगादुर्वशीं वरां ॥४॥
तां दृष्ट्वा विदितो हृष्टः स्वागतेनार्चितस्तया ।
सुखासीनः सुखासीनां स्मितपूर्वं वचो ऽब्रवीत् ॥५॥
विदितं ते ऽस्तु सुश्रोणि प्रहितो ऽहमिहागतः ।
त्रिदिवस्यैकराजेन त्वत्प्रसादाभिनन्दिना ॥६॥
यस्तु देवमनुष्येषु प्रख्यातः सहजैर्गुणैः ।
श्रिया शीलेन रूपेण व्रतेन च दमेन च ॥७॥
प्रख्यातो बलवीर्येण संमतः प्रतिभानवान् ।
वर्चस्वी तेजसा युक्तः क्षमावान् वीतमत्सरः ॥८॥

साङ्गोपनिषदो वेदांश्चतुराख्यायपञ्चमान् ।
यो ऽधीते गुरुशुश्रूषां मेधां चाष्टगुणाश्रयां ॥९॥
ब्रह्मचर्येण दाक्ष्येण प्रसवैर्वयसापि च ।
एको वै रक्षिता चैव त्रिदिवं मघवानिव ॥१०॥
अकत्थनो मानयिता स्थूललक्षः प्रियंवदः ।
सुहृदश्चान्नपानेन विविधेनाभिवर्षति ॥११॥
सत्यवाक् पूजितो वक्ता रूपवाननहंकृतः ।
भक्तानुकम्पी कान्तश्च प्रियश्च स्थिरसङ्गरः ॥१२॥
प्रार्थनीयैर्गुणगणैर्महेन्द्रवरुणोपमैः ।
विदितस्ते ऽर्जुनो वीरः स स्वर्गफलमाप्नुयात् ॥१३॥
तव शक्राभ्यनुज्ञातः पादावद्य प्रपद्यतां ।
तदेव कुरु कल्याणि प्रपन्नस्त्वां धनंजयः ॥१४॥
एवमुक्ता स्मितं कृत्वा संमानं बहुमन्य च ।
प्रत्युवाचोर्वशी प्रीता चित्रसेनमनिन्दिता ॥१५॥
यस्तस्य कथितः सर्वो गुणोद्देशस्त्वया मम ।
तं श्रुत्वा प्रथमे धन्यं वरेण्यं किमृतार्जुनं ॥१६॥
महेन्द्रस्य नियोगेन त्वत्तः संप्रणयेन च ।
तस्य चाहं गुणौघेन फाल्गुणे जातमन्मथा ॥१७॥
गच्छ त्वं हि यथाकाममागमिष्याम्यहं सुखं ॥१८॥

॥इत्यिन्द्रलोकागमने चतुर्थः सर्गः ॥४॥

## ॥वैशम्पायन उवाच॥

ततो विसृज्य गन्धर्वं कृतकृत्यं शुचिस्मिता ।
उर्वशी चाकरोत् स्नानं पार्थप्रार्थनलालसा ॥१॥
स्नानालङ्करणैर्हृद्यैर्गन्धमाल्यैश्च सुप्रभैः ।
धनंजयस्य रूपेण शरैर्मन्मथचोदितैः ॥२॥
अतिविद्धेन मनसा मन्मथेन प्रचोदिता ।
दिव्यास्तरणसंस्तीर्णे विस्तीर्णे शयनोत्तमे ॥३॥
चित्तसङ्कल्पभावेन सुचित्तानन्यमानसा ।
मनोरथेन संप्राप्तं रमयन्तीव फाल्गुनं ॥४॥
निर्गम्य चन्द्रोदयने विगाढे रजनीमुखे ।
प्रस्थिता सा पृथुश्रोणी पार्थस्य भवनं प्रति ॥५॥
मृदुकुञ्चितदीर्घेण कुसुमोत्करधारिणा ।
केशहस्तेन ललना जगामाथ विराजती ॥६॥
भ्रूक्षेपालापमाधुर्यैः कान्त्या सौम्यतयापि च ।
शशिनं वक्त्रचन्द्रेण साह्वयन्तीव गच्छती ॥७॥

दिव्याङ्गरागौ सुमुखौ दिव्यचन्दनरूषितौ ।
गच्छन्त्या हारविकचौ स्तनौ तस्या ववल्गतुः ॥८॥
स्तनोद्वहनसङ्क्षोभान्नाम्यमाना पदे पदे ।
त्रिबलीदामचित्रेण मध्येनातीव शोभिता ॥९॥
अधो भूधरविस्तीर्णं नितम्बोन्नतपीवरं ।
मन्मथायतनं शुभ्रं रसनादामशोभितं ॥१०॥
ऋषीणामपि दिव्यानां मनोव्याघातकारणं ।
सूक्ष्मवस्त्रधरं रेजे जघनं निरवद्यया ॥११॥
गूढगुल्फधरौ पादौ ताम्रायततलाङ्गुली ।
कूर्मपृष्ठोन्नतौ चापि शोभेते किङ्किणीकिनौ ॥१२॥
सीधुपानेन चाल्पेन तुष्ट्याथ मदनेन च ।
विलासनैश्च विविधैः प्रेक्षणीयतराभवत् ॥१३॥
सिद्धचारणगन्धर्वैः सा प्रयाता विलासिनी ।
बह्वाश्चर्ये ऽपि वै स्वर्गे लोभनीयतमाकृतिः ॥१४॥
सुसूक्ष्मेणोत्तरीयेण मेघवर्णेन राजता ।
तनुरभ्रावृता व्योम्नि चन्द्रलेखेव गच्छती ॥१५॥
ततः प्राप्ता क्षणेनैव मनःपवनगामिनी ।
भवनं पाण्डुपुत्रस्य फाल्गुनस्य शुचिस्मिता ॥१६॥
तत्र द्वारमनुप्राप्ता द्वारस्थैश्च निवेदिता ।
अर्जुनस्य नरश्रेष्ठ उर्वशी स्वर्गभूषणा ॥१७॥

उपातिष्ठत तद्वेश्म निर्मलं सुमनोहरं ।
स शङ्कितमना राजन् प्रत्युद्गच्छत तां निशि ॥१८॥
दृष्ट्वैव चोर्वशीं पार्थो लज्जासंवृतलोचनः ।
तदभिवदनं कृत्वा गुरुपूजां प्रयुक्तवान् ॥१९॥

॥अर्जुन उवाच॥

अभिवादये त्वां शिरसा प्रवराप्सरसां वरे ।
किमाज्ञापयसे देवि प्रेष्यस्ते ऽहमुपस्थितः ॥२०॥
फाल्गुनस्य वचः श्रुत्वा गतसंज्ञा तदोर्वशी ।
गन्धर्ववचनं सर्वं श्रावयामास तत् तदा ॥२१॥

॥उर्वश्युवाच॥

यथा मे चित्रसेनेन कथितं मनुजोत्तम ।
तत् ते सर्वं प्रवक्ष्यामि यथा चाहमिहागता ॥२२॥
उपस्थाने महेन्द्रस्य वर्तमाने मनोरमे ।
तवागमवतो वृत्ते स्वर्गस्य परमोत्सवे ॥२३॥
रुद्राणां चैव सान्निध्यमादित्यानां च सर्वशः ।
समागमे ऽश्विनोश्चैव वसूनां च नरोत्तम ॥२४॥
महर्षीणां च सङ्घेषु राजर्षिप्रवरेषु च ।
सिद्धचारणयक्षेषु महोरगगणेषु च ॥२५॥

उपविष्टेषु सर्वेषु स्थानमानप्रभावतः ।
अद्धा प्रज्वलमानेषु अग्निषु मार्गवर्त्मसु ॥२६॥
वीनासु वाद्यमानासु गन्धर्वैः शक्रनन्दन ।
दिव्ये मनोरमे गेये प्रवृत्ते पृथुलोचन ॥२७॥
सर्वाप्सरःसु मुख्यासु प्रवृत्तासु कुरूद्वह ।
त्वं किलानिमिषः पार्थ मामिकां दृष्टवानसि ॥२८॥
तत्र चावभृथे तस्मिन्नुपस्थाने दिवौकसां ।
तव पित्राभ्यनुज्ञाता गता स्वं स्वं गृहं सुराः ॥२९॥
तथैवाप्सरसः सर्वाः विसृष्टाः स्वं गृहं गताः ।
अपि चान्याश्च शत्रुघ्न तव पित्रा विवर्जिताः ॥३०॥
तत्र शक्रेण संदिष्टश्चित्रसेनो ममान्तिकं ।
प्राप्तः कमलपत्राक्ष स च मामब्रवीदथ ॥३१॥
त्वत्कृते ऽहं सुरेशेन प्रेषितो वरवर्णिनि ।
प्रियं कुरु महेन्द्रस्य मम चैवात्मनश्च ह ॥३२॥
शक्रतुल्यं रणे शूरं सदौदार्यगुणान्वितं ।
पार्थं प्रार्थय सुश्रोणि त्वमित्येवं तदाब्रवीत् ॥३३॥
ततो ऽहं समनुज्ञाता तेन पित्रा च ते ऽनघ ।
तवान्तिकमनुप्राप्ता शुश्रूषितुमरिंदम ॥३४॥
त्वद्गुणाकृष्टचित्ताहमनङ्गवशमागता ।
चिराभिलषितो वीर ममाप्येष मनोरथः ॥३५॥

॥ वैशम्पायन उवाच ॥

तां तथा ब्रुवतीं श्रुत्वा भृशं लज्जावृतो ऽर्जुनः ।
उवाच कर्णौ हस्ताभ्यां पिधाय त्रिदशालये ॥३६॥
दुःश्रुतं मे ऽस्तु सुभगे यन्मां वदसि भाविनि ।
गुरुदारैः समाना मे निश्चयेन वरानने ॥३७॥
यथा कुन्ती महाभागा यथेन्द्राणी शची मम ।
तथा त्वमसि कल्याणि नात्र कार्या विचारणा ॥३८॥
यच्चेक्षितासि विस्पष्टं विशेषेण मया शुभे ।
तच्च कारणं पूर्वं हि शृणु सत्यं शुचिस्मिते ॥३९॥
इयं पौरववंशस्य जननी मुदितेति ह ।
त्वामहं दृष्टवांस्तत्र विज्ञायोत्फुल्ललोचनः ॥४०॥
न मामर्हसि कल्याणि अन्यथा मन्तुमप्सरः ।
गुरोर्गुरुतरी मे त्वं मम वंशविवर्द्धिनि ॥४१॥

॥ उर्वश्युवाच ॥

अनावृत्ताश्च सर्वाः स्म देवराजाभिनन्दन ।
गुरुस्थाने न मां वीर नियोक्तुं त्वमिहार्हसि ॥४२॥
पुरोर्वंशे हि ये पुत्रा नप्तारो वा त्विहागताः ।
तपसा रमयन्त्यस्मान् न च तेषां व्यतिक्रमः ॥४३॥

तत् प्रसीद न मामार्त्तां निसर्जयितुमर्हसि ।
हृच्छयेन च संतप्तां भक्तां च भज मानद ॥४४॥

॥अर्जुन उवाच॥

शृणु सत्यं वरारोहे यत् त्वां वक्ष्याम्यनिन्दिते ।
शृण्वन्तु मे दिशश्चैव विदिशश्च सदेवताः ॥४५॥
यथा कुन्ती च माद्री च शची चेह ममानघे ।
तथा च वंशजननी त्वं हि मे ऽद्य गरीयसी ॥४६॥
गच्छ मूर्द्धा प्रपन्नो ऽस्मि पादौ ते वरवर्णिनि ।
त्वं हि मे मातृवत् पूज्या रक्ष्यो ऽहं पुत्रवत् त्वया ॥४७॥

॥वैशम्पायन उवाच॥

एवमुक्ता तु पार्थेन उर्वशी क्रोधमूर्छिता ।
वेपन्ती भृकुटीं कृत्वा शशापाथ धनंजयं ॥४८॥

॥उर्वश्युवाच॥

तव पित्राभ्यनुज्ञातां स्वयं च गृहमागतां ।
यस्मान्मां नाभिनन्देथाः कामबाणवशं गतां ॥४९॥
तस्मात् त्वं नर्तनः पार्थ स्त्रीमध्ये मानवर्जितः ।
अपुमानिति विख्यातः षण्ढवद्विचरिष्यसि ॥५०॥

एवं दत्त्वार्जुने शापं स्फुरदोष्ठी श्वसत्यथ ।
पुनः प्रत्यागता क्षिप्रमुर्वशी गृहमात्मनः ॥५१॥
ततो ऽर्जुनस्त्वरमाणश्चित्रसेनस्य मन्दिरं ।
संप्राप्य रजनीवृत्तं तदुर्वश्या यथातथं ।
विवेदयामास तदा चित्रसेनस्य पाण्डवः ॥५२॥
तत्र सर्वं यथावृत्तं शापं चैव पुनः पुनः ।
न्यवेदयच्च शक्रस्य चित्रसेनो ऽपि सर्वशः ॥५३॥
तत आनाय्य तनयं विविक्ते हरिवाहनः ।
सान्त्वयित्वा शुभैर्वाक्यैः स्मयमानो ऽभ्यभाषत ॥५४॥
सुपुत्राद्य पृथा तात त्वया भरतसत्तम ।
ऋषयो ऽपि हि धैर्येण जिता वै ते महाभुज ॥५५॥
यं तु शप्तवती शापमुर्वशी तव मानद ।
स चापि ते ऽर्थकृत् तात साधकश्च भविष्यति ॥५६॥
अज्ञातवासो वस्तव्यो युष्माभिर्भूतले ऽनघ ।
वर्षे त्रयोदशे वीर तत्र तं क्षपयिष्यसि ॥५७॥
तेन नर्तनवेषेण अपुंस्त्वेन तथैव च ।
वर्षमेकं विहृत्यैवं ततः पुंस्त्वमवाप्स्यसि ॥५८॥
एवमुक्तस्तु शक्रेण फाल्गुनः परवीरहा ।
मुदं परमिकां लेभे न च शापं व्यचिन्तयत् ॥५९॥

चित्रसेनेन सहितो गन्धर्वेण यशस्विना ।
रेमे स स्वर्गसदने पाण्डुपुत्रो धनंजयः ॥६०॥

य इदं शृणुयान्नित्यं वृत्तं पाण्डुसुतस्य वै ।
न तस्य कामः कामेषु पापकेषु प्रवर्तते ॥६१॥
इदममरवरात्मजस्य घोरं शुचिचरितं विनिशम्य फाल्गुणस्य ।
व्यपगतमदरागदम्भद्वेषदोषास्त्रिदिवगता अभिरमन्ति मानवेन्द्राः ॥६२॥
॥इति पञ्चमः सर्गः ॥५॥

॥ इन्द्रलोकागमनं समाप्तं ॥



॥ वैशम्पायन उवाच ॥

पाण्डवाश्चापि निर्गम्य नगराद्वारणावतात् ।
नदीं गङ्गामनुप्राप्ता मातृषष्ठा महाबलाः ॥१॥
दासानां भुजवेगेन नद्याः स्रोतोजलेन च ।
वायुना चानुकूलेन तूर्णं पारमवाप्नुवन् ॥२॥
ततो नावं परित्यज्य प्रययुर्दक्षिणां दिशं ।
विज्ञाय निशि पन्थानं नक्षत्रगणसूचितं ॥३॥
यतमाना वनं राजन् गहनं प्रतिपेदिरे ।
ततः श्रान्ताः पिपासार्त्ता निद्रान्धाः पाण्डुनन्दनाः ॥४॥
पुनरूचुर्महावीर्यं भीमसेनमिदं वचः ।
इतः कष्टतरं किं नु यद्वयं गहने वने ॥५॥
दिशश्च न विजानीमो गन्तुं चैव न शक्नुमः ।
तं च पापं न जानीमो यदि दग्धः पुरोचनः ॥६॥
कथं नु विप्रमुच्येम भयादस्मादलक्षिताः ।
पुनरस्मानुपादाय तथैव व्रज भारत ॥७॥

[4 **]

त्वं हि नो बलवानेको यथा सततगस्तथा ।
इत्युक्तो धर्मराजेन भीमसेनो महाबलः ॥८॥
आदाय कुन्तीं भ्रातॄंश्च जगामाशु महाबलः ।

॥ वैशम्पायन उवाच ॥

तेन विक्रममाणेन ऊरुवेगसमीरितं ॥९॥
वनं सवृक्षविटपं व्याघूर्णितमिवाभवत् ।
जङ्घावातो ववौ चास्य शुचिशुक्रागमे यथा ॥१०॥
आवर्जितलतावृक्षं मार्गं चक्रे महाबलः ।
समृद्धान् पुष्पितांश्चैव फलितांश्च वनस्पतीन् ॥११॥
अवरुज्य ययौ गुल्मान् पथस्तस्य समीपजान् ।
स रोषित इव क्रुद्धो वने ऽभञ्जन्महाद्रुमान् ॥१२॥
त्रिःप्रश्रुतमदः शुष्मी षष्टिवर्षी मतङ्गराट् ।
गच्छतस्तस्य वेगेन तार्क्ष्यमारुतरंहसः ॥१३॥
भीमस्य पाण्डुपुत्राणां मूर्छेव समजायत ।
असकृच्चापि संतीर्य दूरपारं भुजप्लवैः ॥१४॥
पथि गच्छन्तमासेदुर्धार्तराष्ट्रभयात् तदा ।
कृच्छ्रेण मातरं चैव सुकुमारीं यशस्विनीं ॥१५॥
अवहत् स तु पृष्ठेन रोधःसु विषमेषु च ।
अगमच्च वनोद्देशमल्पमूलफलोदकं ॥१६॥

क्रूरपक्षिमृगघोरं सायाह्ने भरतर्षभ ।
घोरा समभवत् सन्ध्या दारुणा मृगपक्षिणः ॥१७॥
अप्रकाशा दिशः सर्वा वातैरासन्ननार्तवैः ।
शीर्णपर्णफलै राजन् बहुगुल्मक्षुपैर्द्रुमैः ॥१८॥
भग्नावभुग्नभूयिष्ठैर्नानाद्रुमसमाकुलैः ।
ते श्रमेण च कौरव्यास्तृष्णया च प्रपीडिताः ॥१९॥
नाशक्नुवंस्तदा गन्तुं निद्रया च प्रवृद्धया ।
न्यविशन्त हि ते सर्वे निरास्वादे महावने ॥२०॥
ततस्तृषापरिक्लान्ता कुन्ती पुत्रानथाब्रवीत् ।
माता सती पाण्डवानां पञ्चानां मध्यतः स्थिता ॥२१॥
तृष्णया हि परीतास्मि पुत्रान् भृशमथाब्रवीत् ।
तच्छ्रुत्वा भीमसेनस्य मातृस्नेहात् प्रजल्पितं ॥२२॥
कारुण्येन मनस्तप्तं गमनायोपचक्रमे ।
ततो भीमो वनं घोरं प्रविश्य विजनं महत् ॥२३॥
न्यग्रोधं विपुलच्छायं रमणीयं ददर्श ह ।
तत्र निक्षिप्य तान् सर्वानुवाच भरतर्षभ ॥२४॥
पानीयं मृगयामीह विश्रमध्वमिति प्रभो ।
एते ब्रुवन्ति मधुरं सारसा जलचारिणः ॥२५॥
ध्रुवमत्र जलस्थानं महच्चेति मतिर्मम ।
अनुज्ञातः स गच्छेति भ्रात्रा ज्येष्ठेन भारत ॥२६॥

जगाम तत्र यत्र स्म सारसा जलचारिणः ।
स तत्र पीत्वा पानीयं स्नात्वा च भरतर्षभ ॥२७॥
तेषामर्थेन जग्राह भ्रातॄणां भ्रातृवत्सलः ।
भृशं शोकपरीतात्मा विललाप वृकोदरः ॥२८॥
अतः कष्टतरं किं नु द्रष्टव्यं तु भविष्यति ।
यत् पश्यामि महीसुप्तान् भ्रातॄनद्य सुमन्दभाक् ॥२९॥
शयनेषु परार्ध्येषु ये पुरा वारणावते ।
नाधिजग्मुस्तदा निद्रां ते ऽद्य सुप्ता महीतले ॥३०॥
स्वसारं वसुदेवस्य शत्रुसङ्घविमर्दिनः ।
कुन्तीराजसुतां कुन्तीं सर्वलक्षणपूजितां ॥३१॥
स्नुषां विचित्रवीर्यस्य भार्यां पाण्डोर्महात्मनः ।
तथैव चास्मज्जननीं पुण्डरीकोदरप्रभां ॥३२॥
सुकुमारतरामेनां महार्हशयनोचितां ।
शयानां पश्यताद्येह पृथिव्यामतथोचितां ॥३३॥
धर्मादिन्द्राच्च वाताच्च सुषुवे या सुतानिमान् ।
सेयं भूमौ परिश्रान्ता शेते प्रासादशायिनी ॥३४॥
किं तु दुःखतरं शक्यं मया द्रष्टुमतः परं ।
यो ऽहमद्य नरव्याघ्रान् सुप्तान् पश्यामि भूतले ॥३५॥
त्रिषु लोकेषु यो राज्यं धर्मविद्यो ऽर्हति नृपः ।
सो ऽयं भूमौ परिश्रान्तः शेते प्राकृतवत् कथं ॥३६॥

अयं नीलाम्बुदश्यामो नरेष्वप्रतिमो ऽर्जुनः ।
शेते प्राकृतवद्भूमौ ततो दुःखतरं तु किं ॥३७॥
अश्विनाविव देवानां यामनौ रूपसंपदा ।
तौ प्राकृतवच्छेमौ प्रसुप्तौ धरणीतले ॥३८॥
ज्ञातयो यस्य नैव स्युर्विषमाः कुलपांसनाः ।
स जीवेत सुखं लोके ग्रामद्रुम इवैकजः ॥३९॥
एको वृक्षो हि यो ग्रामे भवेत् पर्णफलान्वितः ।
चैत्यो भवति निर्ज्ञातिरर्चनीयः सुपूजितः ॥४०॥
येषां च बहवः शूराः ज्ञातयो धर्ममाश्रिताः ।
ते जीवन्ति सुखं लोके भवन्ति च निरामयाः ॥४१॥
बलवन्तः समृद्धार्था मित्रबान्धवनन्दनाः ।
जीवन्त्यन्योन्यमाश्रित्य द्रुमाः काननजा इव ॥४२॥
वयं तु धृतराष्ट्रेण सपुत्रेण दुरात्मना ।
विवासिता न दग्धाश्च कथंचिद्दैवसंश्रयात् ॥४३॥
तस्मान्मुक्ता वयं दाहादिमं वृक्षमुपाश्रिताः ।
कां दिशं प्रतिपत्स्यामः प्राप्ताः क्लेशमनुत्तमं ॥४४॥
सकामो भव दुर्बुद्धे धार्तराष्ट्राल्पदर्शन ।
नूनं देवाः प्रसन्नास्ते नानुज्ञां मे युधिष्ठिरः ॥४५॥
प्रयच्छति बधे तुभ्यं तेन जीवसि दुर्मते ।
न त्वाद्य ससुतामात्यं सकर्णानुजसौबलं ॥४६॥

गत्वा क्रोधसमाविष्टः प्रेषयिष्ये यमक्षयं ।
किं तु शक्यं मया कर्तुं यत् तेन क्रुध्यते नृपः ॥४७॥
धर्मात्मा पाण्डवश्रेष्ठः पापाचार युधिष्ठिरः ।
एवमुक्त्वा महाबाहुः क्रोधसंदीप्तमानसः ॥४८॥
करं करेण संस्पृश्य निःश्वसन् दीनमानसः ।
पुनर्दीनमना भूत्वा शान्तार्चिरिव पावकः ॥४९॥
भ्रातॄन् महीतले सुप्तानवैक्षत वृकोदरः ।
विश्वस्तानिव संविष्टान् पृथग्जनसमानिव ॥५०॥
नातिदूरे च नगरं वनादस्माद्धिलक्षये ।
जागृतव्ये स्वपन्तीमे हन्त जागर्म्यहं स्वयं ॥५१॥
पास्यन्तीमे जलं पश्चात् प्रतिबुद्धा जितक्लमाः ।
इति भीमो व्यवस्यैव जजागार स्वयं तदा ॥५२॥

॥इति हिडिम्बबधे प्रथमः सर्गः॥१॥



## ॥वैशम्पायन उवाच॥

तत्र तेषु शयानेषु हिडिम्बो नाम राक्षसः ।
अविदूरे वनात् तस्मात् सालवृक्षं समाश्रितः ॥१॥
क्रूरो मानुषमांसादो महावीर्यपराक्रमः ।
प्रावृड्जलधरश्यामः पिङ्गाक्षो दारुणाकृतिः ॥२॥
दंष्ट्राकरालवदनः पिशितेप्सुः क्षुधार्दितः ।
लम्बस्फिग्लम्बजठरो रक्तश्मश्रुशिरोरुहः ॥३॥
महापृष्ठगलस्कन्धः शङ्कुकर्णो विभीषणः ।
यदृच्छया तानपश्यत् पाण्डुपुत्रान् महारथान् ॥४॥
विरूपरूपः पिङ्गाक्षः करालो घोरदर्शनः ।
पिशितेप्सुः क्षुधार्त्तश्च तानपश्यद्यदृच्छया ॥५॥
ऊर्ध्वाङ्गुलिः स कण्डूयन् धुन्वन् रूक्षान् शिरोरुहान् ।
जृम्भमाणो महावक्त्रः पुनःपुनरवेक्ष्य च ॥६॥
हृष्टो मानुषमांसस्य महाकायो महाबलः ।
मेघसंघातवर्ष्मा च तीक्ष्णदंष्ट्रो ज्वलाननः ॥७॥

आघ्राय मानुषं गन्धं भगिनीमिदमब्रवीत् ।
उपपन्नश्चिरस्याद्य भक्ष्यो ऽयं मम सुप्रियः ॥८॥
स्नेहस्रवान् प्रस्रवति जिह्वा पर्येति मे मुखं ।
अष्टौ दंष्ट्राः सुतीक्ष्णाग्राश्चिरस्यापातदुःसहाः ॥९॥
देहेषु मज्जयिष्यामि स्निग्धेषु पिशितेषु च ।
आक्रम्य मानुषं कण्ठमाछिद्य धमनीमपि ॥१०॥
उष्णं नवं प्रपास्यामि फेनिलं रुधिरं बहु ।
गच्छ जानीहि के न्वेते शेरते वनमाश्रिताः ॥११॥
मानुष्यो बलवान् गन्धो घ्राणं तर्पयतीव मे ।
हत्वैतान् मानुषान् सर्वानानयस्व ममान्तिकं ॥१२॥
अस्मद्विषयसुप्तेभ्यो नैतेभ्यो भयमस्ति ते ।
एषामुत्कृत्य मांसानि मानुषाणां यथेष्टतः ॥१३॥
भक्षयिष्यावः सहितौ कुरु तूर्णं वचो मम ।
भक्षयित्वा च मांसानि मानुषाणां प्रकामतः ॥१४॥
नृत्यावः सहितावावां दत्ततालावनेकशः ।
एवमुक्ता हिडिम्बा तु हिडिम्बेन तदा वने ॥१५॥
भ्रातुर्वचनमाज्ञाय त्वरमाणेव राक्षसी ।
जगाम तत्र यत्र स्म पाण्डवा भरतर्षभ ॥१६॥
ददर्श तत्र गत्वा सा पाण्डवान् पृथया सह ।
शयानान् भीमसेनं तु जाग्रतं त्वपराजितं ॥१७॥

दृष्ट्वैव भीमसेनं सा शालपोतमिवोद्गतं ।
राक्षसी कामयामास रूपेणाप्रतिमं भुवि ॥१८॥
अयं श्यामो महाबाहुः सिंहस्कन्धो महाद्युतिः ।
कम्बुग्रीवः पुष्कराक्षो भर्ता युक्तो भवेन्मम ॥१९॥
नाहं भ्रातृवचो जातु कुर्यां क्रूरोपसंहितं ।
पतिस्नेहो हि बलवान् न तथा भ्रातृसौहृदं ॥२०॥
मुहूर्तमपि तृप्तिश्च भवेद्भ्रातुर्ममैव च ।
हतैरेतैरहत्वा तु मोदिष्ये शाश्वतीः समाः ॥२१॥
सा कामरूपिणी रूपं कृत्वा मानुषमुत्तमं ।
उपतस्थे महाबाहुं भीमसेनं शनैः शनैः ॥२२॥
विलज्जमानेव नता दिव्याभरणभूषिता ।
स्मितपूर्वमिदं वाक्यं भीमसेनमथाब्रवीत् ॥२३॥
कुतस्त्वमसि संप्राप्तः कश्चापि पुरुषर्षभ ।
क इमे शेरते चेह पुरुषा देवरूपिणः ॥२४॥
केयं वै बृहती श्यामा सुकुमारी तवानघ ।
शेते वनमिदं प्राप्य विश्वस्ता स्वगृहे यथा ॥२५॥
नेदं जानाति गहनं वनं राक्षससेवितं ।
वसति ह्यत्र पापात्मा हिडिम्बो नाम राक्षसः ॥२६॥
तेनाहं प्रेषिता भ्रात्रा दुष्टभावेन रक्षसा ।
बिभक्षयिषता मांसं युष्माकममरोपमाः ॥२७॥

साहं त्वामभिसंप्रेक्ष्य देवगर्भसमप्रभं ।
नान्यं भर्तारमिच्छामि सत्यमेतद्ब्रवीमि ते ॥२८॥
एतद्विज्ञाय धर्मज्ञ युक्तं मयि समाचर ।
कामोपहतचित्ताङ्गीं भजमानां भजस्व मां ॥२९॥
त्रास्यामि त्वां महाबाहो राक्षसात् पुरुषादकात् ।
वत्स्यावो गिरिदुर्गेषु भर्ता भव ममानघ ॥३०॥
अन्तरीक्षचरी ह्यस्मि कामतो विचरामि च ।
अतुलामाप्नुहि प्रीतिं तत्र तत्र मया सह ॥३१॥

॥ भीम उवाच ॥

मातरं भ्रातरं ज्येष्ठं कनिष्ठमपरानपि ।
परित्यजेत को न्वद्य प्रभवन्निह राक्षसि ॥३२॥
को हि सुप्तानिमान् भ्रातॄन् दत्वा राक्षसभोजनं ।
मातरं च नरो गच्छेत् कामार्त्त इव मद्विधः ॥३३॥

॥ राक्षस्युवाच ॥

यत् ते प्रियं तत् करिष्ये सर्वानेतान् प्रबोधय ।
मोक्षयिष्याम्यहं कामं राक्षसात् पुरुषादकात् ॥३४॥

॥भीम उवाच॥

सुखसुप्तान् वने भ्रातॄन् मातरं चैव राक्षसि ।
न भयाद्बोधयिष्यामि भ्रातुस्तव दुरात्मनः ॥३५॥
न हि मे राक्षसा भीरु सोढुं शक्ताः पराक्रमं ।
न मनुष्या न गन्धर्वा न यक्षाश्चारुलोचने ॥३६॥
गच्छ वा तिष्ठ वा भद्रे यद्वापीच्छसि तत् कुरु ।
तं वा प्रेषय तन्वङ्गि भ्रातरं पुरुषादकं ॥३७॥

॥इति हिडिम्बबधे द्वितीयः सर्गः ॥२॥



## ॥वैशम्पायन उवाच॥

तां विदित्वा चिरगतां हिडिम्बां राक्षसेश्वरः ।
अवतीर्य द्रुमात् तस्मादाजगामाशु पाण्डवान् ॥१॥
लोहिताक्षो महाबाहुरूर्ध्वकेशो महाननः ।
मेघसंघातवर्ष्मा च तीक्ष्णदंष्ट्रो भयानकः ॥२॥
तमापतन्तं दृष्ट्वैव तथा विकृतदर्शनं ।
हिडिम्बोवाच वित्रस्ता भीमसेनमिदं वचः ॥३॥
आपतत्येष दुष्टात्मा संक्रुद्धः पुरुषादकः ।
साहं त्वां भ्रातृभिः सार्द्धं यद्ब्रवीमि तथा कुरु ॥४॥
अहं कामगमा वीर रक्षोबलसमन्विता ।
आरुहेमां मम श्रोणीं नेष्यामि त्वां विहायसा ॥५॥
प्रबोधयैनान् संसुप्तान् मातरं च परंतप ।
सर्वानेव गमिष्यामि गृहीत्वा वो नभः प्रति ॥६॥

## ॥भीमसेन उवाच॥

मा भैस्त्वं विपुलश्रोणि नैष कश्चिन्मयि स्थिते ।
अहमेनं हनिष्यामि प्रेक्षन्त्यास्ते सुमध्यमे ॥७॥

नायं प्रतिबलो भीरु राक्षसापसदो मम ।
सोढुं युधि परिस्पन्दमथवा सर्वराक्षसाः ॥८॥
पश्य बाहू सुवृत्तौ मे हस्तिहस्तनिभाविमौ ।
ऊरू परिघसंकाशौ संहतं चाप्युरो महत् ॥९॥
विक्रमं मे यथेन्द्रस्य साद्य द्रक्ष्यसि शोभने ।
मावमंस्थाः पृथुश्रोणि मत्वा मामिह मानुषं ॥१०॥

॥हिडिम्बोवाच॥

नावमन्ये नरव्याघ्र त्वामहं देवरूपिणं ।
दृष्टप्रभावस्तु मया मानुषेष्वेव राक्षसः ॥११॥

॥वैशम्पायन उवाच॥

तथा संजल्पतस्तस्य भीमसेनस्य भारत ।
वाचः शुश्राव ताः क्रुद्धो राक्षसः पुरुषादकः ॥१२॥
अवेक्ष्यमाणस्तस्याश्च हिडिम्बो मानुषं वपुः ।
स्रग्दामपूरितशिखं समग्रेन्दुनिभाननं ॥१३॥
सुभ्रुनासाक्षिकेशान्तं सुकुमारनखत्वचं ।
सर्वाभरणसंयुक्तं सुसूक्ष्माम्बरवाससं ॥१४॥
तां तथा मानुषं रूपं बिभ्रतीं सुमनोहरं ।
पुंस्कामां शङ्कमानश्च चुक्रोध पुरुषादकः ॥१५॥

संक्रुद्धो राक्षसस्तस्या भगिण्याः कुरुसत्तम ।
उत्फाल्य विपुले नेत्रे ततस्तामिदमब्रवीत् ॥१६॥
को हि मे भोक्तुकामस्य विघ्नं चरति दुर्मतिः ।
न बिभेषि हिडिम्बे किं मत्कोपाद्विप्रमोहिता ॥१७॥
धिक् त्वामसति पुंस्कामे मम विप्रियकारिणि ।
सर्वेषां राक्षसेन्द्राणां पूर्वेषामयशस्करि ॥१८॥
यानिमानाश्रिताकार्षीर्विप्रियं सुमहन्मम ।
एष तानद्य वै सर्वान् हनिष्यामि त्वया सह ॥१९॥
एवमुक्ता हिडिम्बां स हिडिम्बो लोहितेक्षणः ।
वधायाभिपपातैनां दन्तैर्दन्तानुपस्पृशन् ॥२०॥
तमापतन्तमाप्रेक्ष्य भीमः प्रहरतां वरः ।
भर्त्सयामास तेजस्वी तिष्ठ तिष्ठेति चाब्रवीत् ॥२१॥

॥ इति हिडिम्बबधे त्रितीयः सर्गः ॥३॥



## ॥वैशम्पायन उवाच॥

भीमसेनस्तु तं दृष्ट्वा राक्षसं प्रहसन्निव ।
भगिनीं प्रति संक्रुद्धमिदं वचनमब्रवीत् ॥१॥
किं ते हिडिम्ब एतैर्वा सुखसुप्तैः प्रबोधितैः ।
मामासादय दुर्बुद्धे तरसा त्वं नराशन ॥२॥
मय्येव प्रहरेहि त्वं न स्त्रियं हन्तुमर्हसि ।
विशेषतोऽनपकृते परेणापकृते सति ॥३॥
न हीयं स्ववशा बाला कामयत्यद्य मामिह ।
चोदितैषा ह्यनङ्गेन शरीरान्तरचारिणा ।
भगिनी तव दुर्वृत्त रक्षसां वै यशोहर ॥४॥
त्वन्नियोगेन चैवेयं रूपं मम समीक्ष्य च ।
कामयत्यद्य मां भीरुस्तव नैषा दूषयते कुलं ॥५॥
अनङ्गेन कृते दोषे नैनां गर्हितुमर्हसि ।
मयि तिष्ठ हि दुष्टात्मन् न स्त्रियं हन्तुमर्हसि ॥६॥

संगच्छस्व मया सार्द्धं एकेनैको नराशन ।
अहमेव नयिष्यामि त्वामद्य यमसादनं ॥ ७ ॥
अद्य मद्बलनिष्पिष्टं शिरो राक्षस दीर्यतां ।
कुञ्जरस्येव पादेन विनिष्पिष्टं बलीयसः ॥ ८ ॥
अद्य गात्राणि ते कङ्काः श्येनगोमायवस्तथा ।
कर्षन्तु भृशसंहृष्टा निहतस्य मया मृधे ॥ ९ ॥
क्षणेनाद्य करिष्ये ऽहमिदं वनमराक्षसं ।
पुरा यद्दूषितं नित्यं त्वया भक्षयता नरान् ॥ १० ॥
अद्य त्वां भगिनी रक्षः कृष्यमाणं मयासकृत् ।
द्रक्ष्यत्यद्रिप्रतीकाशं सिंहेनेव महाद्विपं ॥ ११ ॥
निराबाधास्त्वयि हते मया राक्षसपांसन ।
वनमेतच्चरिष्यन्ति पुरुषा वनचारिणः ॥ १२ ॥

॥ हिडिम्ब उवाच ॥

गर्जितेन वृथा किं ते कत्थितेन च मानुष ।
कृत्वा तत् कर्मणा सर्वं कत्थेथा माचिरं कृथाः ॥ १३ ॥
बलिनं मन्यसे यच्च आत्मानं सुपराक्रमं ।
ज्ञास्यस्यद्य समागम्य मयात्मानं बलाधिकं ॥ १४ ॥
न तावदेतान् हिंसिष्ये स्वपन्त्वेते यथासुखं ।
एष त्वामेव दुर्बुद्धे निहन्म्यद्याप्रियंवद ॥ १५ ॥

पीत्वा तवासृग्गात्रेभ्यस्ततः पश्चादिमानपि ।
हनिष्यामि ततः पश्चादिमां विप्रियकारिणीं ॥१६॥
एवमुक्त्वा ततो बाहुं प्रगृह्य पुरुषादकः ।
अभ्यद्रवत संक्रुद्धो भीमसेनमरिंदमं ॥१७॥
तस्याभिद्रवतस्तूर्णं भीमो भीमपराक्रमः ।
वेगेन प्रहितं बाहुं निजग्राह हसन्निव ॥१८॥
निगृह्य तं बलाद्भीमो विस्फुरन्तं चकर्ष ह ।
तस्माद्देशाद्धनूंष्यष्टौ सिंहः क्षुद्रमृगं यथा ॥१९॥
ततः स राक्षसः क्रुद्धः पाण्डवेन बलार्दितः ।
भीमसेनं समालिङ्ग्य व्यनदद्भैरवं रवं ॥२०॥
पुनर्भीमो बलादेनं विचकर्ष महाबलः ।
मा शब्दः सुखसुप्तानां भ्रातॄणां मे भवेदिति ॥२१॥
अन्योन्यं तौ समासाद्य विचकर्षतुरोजसौ ।
हिडिम्बो भीमसेनश्च विक्रमं चक्रतुः परं ॥२२॥
बभञ्जतुस्तदा वृक्षाँल्लताश्चकर्षतुस्ततः ।
मत्ताविव सुसंरब्धौ वारणौ षष्टिहायनौ ॥२३॥
तयोः शब्देन महता विबुद्धास्ते नरर्षभौ ।
सह मात्रा च ददृशुर्हिडिम्बामग्रतः स्थितां ॥२४॥
प्रबुद्धास्ते हिडिम्बाया रूपं दृष्ट्वातिमानुषं ।
विस्मिताः पुरुषव्याघ्रा बभूवुः पृथया सह ॥२५॥

ततः कुन्ती समीक्ष्यैनां विस्मिता रूपसंपदा ।
उवाच मधुरं वाक्यं सान्त्वपूर्वमिदं शनैः ॥ २६॥
कस्य त्वं सुरगर्भाभे का वासि वरवर्णिनि ।
केन कार्येण संप्राप्ता कुतश्च गमनं तव ॥ २७॥
यदिवास्य वनस्यासि देवता यदिवाप्सराः ।
आचक्ष्व मम तत् सर्वं किमर्थं चेह तिष्ठसि ॥ २८॥

॥ हिडिम्बोवाच॥

यदेतत् पश्यसि वनं नीलमेघनिभं महत् ।
निवासो राक्षसस्यैव हिडिम्बस्य ममैव च ॥ २९॥
तस्य मां राक्षसेन्द्रस्य भगिनीं विद्धि भाविनि ।
भ्रात्रा संप्रेषितामार्ये त्वां सपुत्रां जिघांसितुं ॥ ३०॥
क्रूरबुद्धेरहं तस्य वचनादागतास्मि ह ।
अद्राक्षं नवहेमाभं तव पुत्रं महाबलं ॥ ३१॥
ततो ऽहं सर्वभूतानां भावे विचरता शुभे ।
चोदिता तव पुत्रस्य मन्मथस्य वशानुगा ॥ ३२॥
ततो वृतो मया भर्ता तव पुत्रो महाबलः ।
अपनेतुं च यतितो न चैव शकितो मया ॥ ३३॥
चिरायमाणां मां ज्ञात्वा ततः स पुरुषादकः ।
स्वयमेवागतो हन्तुमिमान् सर्वान् तवात्मजान् ॥ ३४॥

स तेन मम कान्तेन तव पुत्रेण धीमता ।
बलार्दितो विनिष्पिष्य व्यपकृष्टो महात्मना ॥३५॥
विकर्षन्तौ महात्मानौ गर्जमानौ परस्परं ।
पश्य त्वं युधि विक्रान्ताविती नृवरराक्षसौ ॥३६॥

॥वैशम्पायन उवाच॥

तस्याः श्रुत्वैव वचनमुत्पपात युधिष्ठिरः ।
अर्जुनो नकुलश्चैव सहदेवश्च वीर्यवान् ॥३७॥
तौ ते ददृशुरासक्तौ विकर्षन्तौ परस्परं ।
काङ्क्षमाणौ जयं चैव सिंहाविव बलोत्कटौ ॥३८॥
तथान्योन्यसमाश्लिष्य विकर्षन्तौ पुनः पुनः ।
दावाग्निधूमसदृशं चक्रतुः पार्थिवं रजः ॥३९॥
वसुधारेणुसम्वीतौ वसुधाधरसन्निभौ ।
बभ्राजतुर्यथा शैलौ नीहारेणाभिसंवृतौ ॥४०॥
राक्षसेन तदा भीमं क्लिश्यमाणं निरीक्ष्य तु ।
उवाचेदं ततः पार्थः प्रहसन् शनकैरिव ॥४१॥
भीम मा भैर्महाबाहो न त्वां बुध्यामहे वयं ।
समेतं भीमरूपेण रक्षसाश्रमकर्षिताः ॥४२॥
साहाय्ये ऽस्मि स्थितः पार्थ पातयिष्यामि राक्षसं ।
नकुलः सहदेवश्च मातरं गोपयिष्यतः ॥४३॥

॥भीम उवाच॥

उदासीनो निरीक्षस्व न कार्यः संभ्रमस्त्वया ।
न जात्वयं पुनर्जीवेन्मद्बाह्वन्तरमागतः ॥४४॥

॥अर्जुन उवाच॥

किमनेन चिरं भीम जीवता पापरक्षसा ।
गन्तव्यं न चिरं स्थातुमिह शक्यमरिंदम ॥४५॥
पुरा संरज्यते प्राची पुरा सन्ध्या प्रवर्तते ।
रौद्रे मुहूर्ते रक्षांसि प्रबलानि भवन्त्युत ॥४६॥
त्वरस्व भीम मा क्रीड जहि रक्षो विभीषणं ।
पुरा विकुरुते मायां भुजयोः सारमर्पय ॥४७॥

॥वैशम्पायन उवाच॥

अर्जुनेनैवमुक्तस्तु भीमो रोषाज्ज्वलन्निव ।
बलमाहारयामास यद्वायोर्जगतः क्षये ॥४८॥
ततस्तस्याम्बुदाभस्य भीमो रोषात् तु रक्षसः ।
उत्क्षिप्याभ्रामयद्देहं तूर्णं शतगुणाधिकं ॥४९॥

॥भीम उवाच॥

वृथा मांसैर्वृथा पुष्टो वृथा वृद्धो वृथा मतिः ।
वृथा मरणमर्हस्त्वं वृथाद्य न भविष्यसि ॥५०॥
क्षेममद्य करिष्यामि यथा वनमकण्टकं ।
न पुनर्मानुषान् हत्वा भक्षयिष्यसि राक्षस ॥५१॥

॥अर्जुन उवाच॥

यदि वा मन्यसे भारं त्वमिमं राक्षसं युधि ।
करोमि तव साहाय्यं शीघ्रमेष निपात्यतां ॥५२॥
अथवाप्यहमेवैनं हनिष्यामि वृकोदर ।
कृतकर्मा परिश्रान्तः साधु तावदुपारम ॥५३॥

॥वैशम्पायन उवाच॥

तस्य तद्वचनं श्रुत्वा भीमसेनो ऽत्यमर्षणः ।
निष्पिष्यैनं बलाद्भूमौ पशुमारममारयत् ॥५४॥
स मार्यमाणो भीमेन ननाद विपुलस्वनं ।
पूरयन् तद्वनं सर्वं जलार्द्र इव दुन्दुभिः ॥५५॥
बाहुभ्यां योक्त्रयित्वा तं बलवान् पाण्डुनन्दनः ।
मध्ये भङ्क्त्वा महाबाहुर्हर्षयामास पाण्डवान् ॥५६॥

हिडिम्बं निहतं दृष्ट्वा प्रहृष्टास्ते तरस्विनः ।
अपूजयन् नरव्याघ्रं भीमसेनमरिंदमं ॥५७॥
पुनरेवार्जुनो वाक्यमुवाचेदं वृकोदरं ।
न दूरं नगरं मन्ये वनादस्मादहं विभो ।
शीघ्रं गच्छाम भद्रं ते न नो विद्यात् सुयोधनः ॥५८॥
तथेत्युक्त्वा ततः सर्वे सह मात्रा महारथाः ।
प्रययुः पुरुषव्याघ्रा हिडिम्बा चैव राक्षसी ॥५९॥

॥ इति चतुर्थः सर्गः ॥४॥

॥ हिडिम्बबधश्च समाप्तः ॥



॥ वैशम्पायन उवाच ॥

तथा तु तेषां वसतां तस्मिन् राष्ट्रे महात्मनां ।
अतिचक्राम सुमहान् कालो ऽथ भरतर्षभ ॥ १ ॥
ततः कदाचिद्भैक्षाय गतास्ते भरतर्षभाः ।
संगत्या भीमसेनस्तु तत्रास्त पृथया सह ॥ २ ॥
अथार्त्तिजं महाशब्दं ब्राह्मणस्य निवेशने ।
भृशमुत्पतितं घोरं कुन्ती शुश्राव भारत ॥ ३ ॥
रोरूयमाणांस्तान् दृष्ट्वा परिदेवयतश्च सा ।
कारुण्यात् साधुभावाच्च कुन्ती राजन् न चक्षमे ॥ ४ ॥
मथ्यमानेव दुःखेन हृदयेन पृथा तदा ।
उवाच भीमं कल्याणी कृपान्वितमिदं वचः ॥ ५ ॥
वसामः सुसुखं पुत्र ब्राह्मणस्य निवेशने ।
अज्ञाता धार्तराष्ट्रस्य सत्कृता वीतमन्यवः ॥ ६ ॥
सा चिन्तये सदा पुत्र ब्राह्मणस्यास्य किं त्वहं ।
प्रियं कुर्यामिति गृहे यत् कुर्युरुषिताः सुखं ॥ ७ ॥
एतावान् पुरुषस्तात कृतं यस्मिन् न नश्यति ।
यावच्च कुर्यादन्यो ऽस्य कुर्यादभ्यधिकं ततः ॥ ८ ॥

तदिदं ब्राह्मणस्यास्य दुःखमापतितं ध्रुवं ।
तत्रास्य यदि साहाय्यं कुर्यामुपकृतं भवेत् ॥९॥

॥भीमसेन उवाच॥

ज्ञायतामस्य यद्दुःखं यतश्चैव समुत्थितं ।
विदित्वा व्यवसिष्यामि यद्यपि स्यात् सुदुष्करं ॥१०॥
एवं तौ कथयन्तौ तु भूयः शुश्रुवतुः स्वनं ।
आर्त्तिजं तस्य विप्रस्य सभार्यस्य विशां पते ॥११॥
अन्तःपुरं ततस्तस्य ब्राह्मणस्य महात्मनः ।
विवेश त्वरिता कुन्ती वत्सबन्धेव सौरभी ॥१२॥
ततस्तं ब्राह्मणं तत्र भार्यया च सुतेन च ।
दुहित्रा चैव सहितं ददर्श विनताननं ॥१३॥

॥ब्राह्मण उवाच॥

धिगिदं जीवितं लोके गतसारमनर्थकं ।
दुःखमूलं पराधीनं भृशमप्रियभागि च ॥१४॥
जीविते परमं दुःखं जीविते परमो ज्वरः ।
जीविते वर्तमानस्य दुःखानामागमो ध्रुवः ॥१५॥
आत्मा ह्येको हि धर्मार्थौ कामं च स निषेवते ।
एतैश्च विप्रयोगो ऽपि दुःखं परमिकं मतं ॥१६॥

आहुः केचित् परं मोक्षं स च नास्ति कथंचन ।
अर्थप्राप्तौ तु नरकः कृत्स्न एवोपपद्यते ॥१७॥
अर्थेप्सुता परं दुःखमर्थप्राप्तौ ततो ऽधिकं ।
जातस्नेहस्य चार्थेषु विप्रयोगो महत्तरं ॥१८॥
न हि योगं प्रपश्यामि येन मुच्येयमापदः ।
पुत्रदारेण वा सार्द्धं प्रद्रवेयमनामयं ॥१९॥
पठितं वै मया पूर्वं वेत्थ ब्राह्मणि तत् तथा ।
यतः क्षेमं ततो गन्तुं त्वया तु मम न श्रुतं ॥२०॥
इह जाता विवृद्धास्मि पिता चापि ममेति वै ।
उक्तवत्यसि दुर्मेधे याच्यमाना मयासकृत् ॥२१॥
स्वर्गतो हि पिता वृद्धस्तथा माताचिरं तव ।
बान्धवा भूतपूर्वाश्च तत्र वासे तु का रतिः ॥२२॥
सो ऽयं ते बन्धुकामाया अशृण्वन्त्या वचो मम ।
बन्धुप्रणाशः संप्राप्तो भृशं दुःखकरो मम ॥२३॥
अथवा मद्विनाशो ऽयं न हि शक्ष्यामि किंचन ।
परित्यक्तुमहं बन्धुं स्वयं जीवन् नृशंसवत् ॥२४॥
सहधर्मचरीं दान्तां नित्यं मातृसमां मम ।
सखायं विहितां देवैर्नित्यं परमिकां गतिं ॥२५॥
पित्रा मात्रा च विहितां सदा गार्हस्थ्यभागिनीं ।
वरयित्वा यथान्यायं मन्त्रवत् परिणीय च ॥२६॥

कुलीनां शीलसंपन्नामपत्यजननीं मम ।
त्वामहं जीवितस्यार्थे साध्वीमनपकारिणीं ।
परित्यक्तुं न शक्यामि भार्यां नित्यमनुव्रतां ॥२७॥
कुत एव परित्यक्तुं सुतं शक्याम्यहं स्वयं ।
बालमप्राप्तवयसमजातव्यञ्जनाकृतिं ॥२८॥
भर्तुरर्थाय निक्षिप्तां न्यासं धात्रा महात्मना ।
यया दौहित्रजाँल्लोकानाशंसे पितृभिः सह ॥२९॥
स्वयमुत्पाद्य तां बालां कथमुत्स्रष्टुमुत्सहे ।
मन्यन्ते केचिदधिकं स्नेहं पुत्रे पितुर्नराः ॥३०॥
कन्यायां केचिदपरे मम तुल्यावुभौ स्मृतौ ।
यस्यां लोकाः प्रसूतिश्च स्थिता नित्यमथो सुखं ॥३१॥
अपापां तामहं बालां कथमुत्स्रष्टुमुत्सहे ।
आत्मानमपि चोत्सृज्य तप्स्यामि परलोकगः ॥३२॥
त्यक्ता ह्येते मया व्यक्तं नेह शक्ष्यन्ति जीवितुं ।
एषां चान्यतमत्यागो नृशंसो गर्हितो बुधैः ॥३३॥
आत्मत्यागे कृते चेमे मरिष्यन्ति मया विना ।
स कृच्छ्रमहमापन्नो न शक्तस्तर्तुमापदं ॥३४॥
अहो धिक् कां गतिं त्वद्य गमिष्यामि सबान्धवः ।
सर्वैः सह मृतं श्रेयो न तु मे जीवितुं क्षमं ॥३५॥

॥इति ब्राह्मणविलापे प्रथमः सर्गः ॥१॥

॥ ब्राह्मणउवाच ॥

---

न संतापस्त्वया कार्यः प्राकृतेनेव कर्हिचित् ।
न हि संतापकालो ऽयं वैद्यस्य तव विद्यते ॥१॥
अवश्यं निधनं सर्वैर्गन्तव्यमिह मानवैः ।
अवश्यभाविन्यर्थे वै संतापो नेह विद्यते ॥२॥
भार्या पुत्रो ऽथ दुहिता सर्वमात्मार्थमिष्यते ।
व्यथां जहि स्वबुद्ध्या त्वं स्वयं यास्यामि तत्र वै ॥३॥
एतद्धि परमं नार्याः कार्यं लोके सनातनं ।
प्राणानपि परित्यज्य यद्भर्तृहितमाचरेत् ॥४॥
तच्च तत्र कृतं कर्म तवापीह सुखावहं ।
भवत्यमुत्रचाक्षय्यं लोके ऽस्मिंश्च यशस्करं ॥५॥
एष चैव गुरुर्धर्मो यं प्रवक्ष्याम्यहं तव ।
अर्थश्च तव धर्मश्च भूयानत्र प्रदृश्यते ॥६॥
यदर्थमिष्यते भार्या प्राप्तः सो ऽर्थस्त्वया मयि ।
कन्या चैका कुमारश्च कृताहमपि चानृणा ॥७॥
समर्थः पोषणे चासि सुतयो रक्षणे तथा ।
न त्वहं सुतयोः शक्ता तथा रक्षणपोषणे ॥८॥

मम हि त्वद्विहीनायाः सर्वप्राणधनेश्वर ।
कथं स्यातां सुतौ बालौ भवेयं च कथं त्वहं ॥९॥
कथं हि विधवानाथा बालपुत्रा विना त्वया ।
मिथुनं जीवयिष्यामि स्थिता साधुगते पथि ॥१०॥
अहङ्कृतावलिप्तैश्च प्रार्थ्यमानामिमां सुतां ।
अयुक्तैस्तव संबन्धे कथं शक्ष्यामि रक्षितुं ॥११॥
उत्सृष्टमामिषं भूमौ प्रार्थयन्ति यथा खगाः ।
प्रार्थयन्ति जनाः सर्वे पतिहीनां तथा स्त्रियं ॥१२॥
साहं विचाल्यमाना वै प्रार्थ्यमाना दुरात्मभिः ।
स्थातुं पथि न शक्ष्यामि सज्जनेष्टे द्विजोत्तम ॥१३॥
कथं तव कुलस्यैकामिमां बालामनागसं ।
पितृपैतामहे मार्गे नियोक्तुमहमुत्सहे ॥१४॥
कथं शक्ष्यामि बालेऽस्मिन् गुणानाधातुमीप्सितान् ।
अनाथे सर्वतो लुप्ते यथा त्वं धर्मदर्शिवान् ॥१५॥
इमामपि च ते बालामनाथां परिभूय मां ।
अनर्हाः प्रार्थयिष्यन्ति शूद्रा वेदश्रुतिमिव ॥१६॥
तां चेदहं न दित्सेयं त्वद्गुणैरुपबृंहितां ।
प्रमथ्यैनां हरेयुस्तु हविर्ध्वाङ्क्षा इवाध्वरात् ॥१७॥
संप्रेक्षमाणा पुत्रं ते नानुरूपमिवात्मनः ।
अनर्हवशमापन्नामिमां चापि सुतां तव ॥१८॥

अवज्ञाता च लोकेषु तथात्मानमजानती ।
अवलिप्तैर्नरैर्ब्रह्मन् मरिष्यामि न संशयः ॥१९॥
तौ च हीनौ मया बालौ त्वया चैव तथात्मजौ ।
विनश्येतां न संदेहो मत्स्याविव जलक्षये ॥२०॥
त्रितयं सर्वथाप्येवं विनशिष्यत्यसंशयं ।
त्वया विहीनं तस्मात् त्वं मां परित्यक्तुमर्हसि ॥२१॥
व्युष्टिरेषा परा स्त्रीणां पूर्वं भर्तुः परां गतिं ।
गन्तुं ब्रह्मन् न पुत्राणामिति धर्मविदो विदुः ॥२२॥
परित्यक्तः सुतश्चायं दुहितेयं तथा मया ।
बान्धवाश्च परित्यक्तास्त्वदर्थं जीवितं च मे ॥२३॥
यज्ञैस्तपोभिर्नियमैर्दानैश्च विविधैस्तथा ।
विशिष्यते स्त्रिया भर्तुर्नित्यं प्रियहिते स्थितिः ॥२४॥
तदिदं यच्चिकीर्षामि धर्मं परमसंमतं ।
इष्टं चैव हितं चैव तव चैव कुलस्य च ॥२५॥
इष्टानि चाप्यपत्यानि द्रव्याणि सुहृदः प्रियाः ।
आपद्धर्मप्रमोक्षाय भार्या चैव सतां मतं ॥२६॥
एकतो वा कुलं कृत्स्नमात्मा वा कुलवर्द्धनं ।
न समं सर्वमेवेति बुद्धानामेष निश्चयः ॥२७॥
स कुरुष्व मया कार्यं तारयात्मानमात्मना ।
अनुजानीहि मामार्य सुतौ मे परिपालय ॥२८॥

अबध्याः स्त्रिय इत्याहुर्धर्मज्ञा धर्मनिश्चये ।
धर्मज्ञान् राक्षसानाहुर्न हन्यात् स च मामपि ॥२९॥
निःसंशयो बधः पुंसां स्त्रीणां संशयितो बधः ।
अतो मामेव धर्मज्ञ प्रस्थापयितुमर्हसि ॥३०॥
भुक्तं प्रियाण्यवाप्तानि धर्मश्च चरितो मया ।
त्वत् प्रसूतिः प्रिया प्राप्ता न मां तप्स्यत्यजीवितं ॥३१॥
जातपुत्रा च वृद्धा च प्रियकामा च ते सदा ।
समीक्ष्यैतदहं सर्वं व्यवसायं करोम्यतः ॥३२॥
उत्सृज्यापि हि मामार्य प्राप्स्यस्यन्यामपि स्त्रियं ।
ततः प्रतिष्ठितो धर्मो भविष्यति पुनस्तव ॥३३॥
न चाप्यधर्मः कल्याण बहुपत्नीकृतां नृणां ।
स्त्रीणामधर्मः सुमहान् भर्तुः पूर्वस्य लङ्घने ॥३४॥
एतत् सर्वं समीक्ष्य त्वमात्मत्यागं च गर्हितं ।
आत्मानं तारयाद्याशु कुलं चेमौ च दारकौ ॥३५॥

॥वैशम्पायन उवाच॥

एवमुक्तस्तया भर्ता तां समालिङ्ग्य भारत ।
मुमोच बाष्पं शनकैः सभार्यो भृशदुःखितः ॥३६॥

॥इति ब्राह्मणविलापे द्वितीयः सर्गः ॥२॥



## ॥वैशम्पायन उवाच॥

तयोर्दुःखितयोर्वाक्यमितिमात्रं निशम्य च ।
ततो दुःखपरीताङ्गा कन्या तावभ्यभाषत ॥१॥
किमेवं भृशदुःखार्त्तौ रोरूयेथामनाथवत् ।
ममापि श्रूयतां वाक्यं श्रुत्वा च क्रियतां क्षमं ॥२॥
धर्मतो ऽहं परित्यज्या युवयोर्नात्र संशयः ।
त्यक्तव्यां मां परित्यज्य त्राह्वि सर्वं ममैकया ॥३॥
इत्यर्थमिष्यते ऽपत्यं तारयिष्यति मामिति ।
तस्मिन्नुपस्थिते काले तरध्वं प्लववन्मया ॥४॥
इह वा तारयेद्दुर्गादुतवा प्रेत्य तारयेत् ।
सर्वथा तारयेत् पुत्रः पुत्र इत्युच्यते बुधैः ॥५॥
आकाङ्क्षन्ते च दौहित्रानपि नित्यं पितामहाः ।
तान् स्वयं वै परित्रास्ये रक्षन्ती जीवितं पितुः ॥६॥
भ्राता च मम बालो ऽयं गते लोकममुं त्वयि ।
अचिरेणैव कालेन विनश्येत न संशयः ॥७॥
ततो ऽपि हि गते स्वर्गं विनष्टे च ममानुजे ।
पिण्डः पितृणां व्युच्छिद्येत् तत् तेषां विप्रियं भवेत् ॥८॥

पित्रा त्यक्ता तथा मात्रा भ्रात्रा चाहमसंशयं ।
दुःखाद्दुःखतरं प्राप्य मृयेयमतथोचिता ॥९॥
त्वयि त्वरोगे निर्मुक्ते माता भ्राता च मे शिशुः ।
सन्तानश्चैव पिण्डश्च प्रतिष्ठास्यत्यसंशयं ॥१०॥
आत्मा पुत्रः सखा भार्या कृच्छ्रं च दुहिता किल ।
स कृच्छ्रान्मोचयात्मानं मां च धर्मे नियोजय ॥११॥
अनाथा कृपणा बाला यत्रक्वचनगामिनी ।
भविष्यामि त्वया तात विहीना तत्क्षणादहं ॥१२॥
अथवाहं करिष्यामि कुलस्यास्य विमोचनं ।
फलसंस्था भविष्यामि कृत्वा कर्म सुदुष्करं ॥१३॥
अथवा यास्यसे तत्र त्यक्त्वा मां द्विजसत्तम ।
पीडिताहं भविष्यामि तदवेक्षस्व मामपि ॥१४॥
तदस्मदर्थं धर्मार्थं प्रसवार्थं च सत्तम ।
आत्मानं परिरक्षस्व त्यक्तव्यां मां च संत्यज ॥१५॥
अवश्यकरणीये च मा त्वां कालो ऽत्यगादयं ॥१६॥
किं त्वतः परमं दुःखं यद्वयं स्वर्गते त्वयि ।
याचमानाः परादन्नं परिधावेम हि श्ववत् ॥१७॥
त्वयि त्वरोगे निर्मुक्ते क्लेशादस्मात् सबान्धवे ।
अमृतेव सती लोके भविष्यामि सुखान्विता ॥१८॥

ततः प्रदानाद्दिवाश्च पितरश्चेति न श्रुतं ।
त्वया दत्तेन तोयेन भविष्यन्ति हिताय वै ॥१९॥

॥वैशम्पायन उवाच॥

एवं बहुविधं तस्या निशम्य परिदेवितं ।
पिता माता च सा चैव कन्या च रुरुदुस्त्रयः ॥२०॥
ततः प्ररुदितान् सर्वान् निशम्याथ सुतस्तयोः ।
उत्फुल्लनयनो बालः कलमव्यक्तमब्रवीत् ॥२१॥
मा पिता रुद मा मातर्मा श्वसस्विति चाब्रवीत् ।
प्रहसन्निव सर्वांस्तानेकैकमुपसर्पति ॥२२॥
ततः स तृणमादाय प्रहृष्टः पुनरब्रवीत् ।
अनेनाहं हनिष्यामि राक्षसं पुरुषादकं ॥२३॥
तथापि तेषां दुःखेन परीतानां निशम्य तत् ।
बालस्य वाक्यमव्यक्तं हर्षः समभवन्महान् ॥२४॥

॥इति त्रितीयः सर्गः ॥३॥

॥ ब्राह्मणविलापश्च समाप्तः ॥



॥ नारद उवाच ॥

शृणु मे विस्तरेणेममितिहासं पुरातनं ।
भ्रातृभिः सहितः पार्थ यथावृत्तं युधिष्ठिर ॥१॥
महासुरस्यान्ववाये हिरण्यकशिपोः पुरा ।
निकुम्भो नाम दैत्येन्द्रस्तेजस्वी बलवानभूत् ॥२॥
तस्य पुत्रौ महावीर्यौ जातौ भीमपराक्रमौ ।
सुन्दोपसुन्दौ दैत्येन्द्रौ दारुणौ क्रूरमानसौ ॥३॥
तावेकनिश्चयौ दैत्यावेककार्यार्थसंगतौ ।
निरन्तरमवर्तेतां समदुःखसुखावुभौ ॥४॥
विनान्योन्यं न भुञ्जाते विनान्योन्यं न गच्छतः ।
अन्योन्यस्य प्रियकारावन्योन्यस्य प्रियंवदौ ॥५॥
एकशीलसमाचारौ द्विधैवैकं यथा कृतौ ।
तौ विवृद्धौ महावीर्यौ कार्येष्वप्येकनिश्चयौ ॥६॥
त्रैलोक्यविजयार्थाय समाधायैकनिश्चयं ।
दीक्षां कृत्वा गतौ विन्ध्यं तत्रोग्रं तेपतुस्तपः ॥७॥
तौ तु दीर्घेण कालेन तपोयुक्तौ बभूवतुः ।
क्षुत्पिपासापरिश्रान्तौ जटावल्कलधारिणौ ॥८॥

मलोपचितसर्वाङ्गौ वायुभक्षौ बभूवतुः ।
आत्ममांसानि जुह्वतौ पादाङ्गुष्ठाग्रविष्ठितौ ॥९॥
ऊर्द्ध्वबाहू चानिमिषौ दीर्घकालं दृढव्रतौ ।
तयोस्तपःप्रभावेन दीर्घकालं प्रतापितः ॥१०॥
धूमं प्रमुमुचे विन्ध्यस्तदद्भुतमिवाभवत् ।
ततो देवा भयं जग्मुरुग्रं दृष्ट्वा तयोस्तपः ॥११॥
तपोविघातार्थमथो देवा विघ्नानि चक्रिरे ।
रत्नैः प्रलोभयामासुः स्त्रीभिश्चोभौ पुनः पुनः ॥१२॥
न च तौ चक्रतुर्भङ्गं व्रतस्य सुमहाव्रतौ ।
अथ मायां पुनर्देवास्तयोश्चक्रुर्महात्मनोः ॥१३॥
भगिन्यो मातरो भार्यास्तयोः परिजनस्तथा ।
प्रपात्यमाना वित्रस्ताः शूलहस्तेन रक्षसा ॥१४॥
भ्रष्टाभरणकेशान्ता एकान्तभ्रष्टवाससः ।
अभिभाष्य ततः सर्वास्तौ त्राहीति प्रचुक्रुशुः ॥१५॥
न च तौ चक्रतुर्भङ्गं व्रतस्य सुमहाव्रतौ ।
यदा क्षोभं नोपयाति नार्त्तिमन्यतरस्तयोः ॥१६॥
ततः स्त्रियस्ता ऽद्भुतं च सर्वमन्तरधीयत ।
ततः पितामहः साक्षादभिगम्य महासुरौ ॥१७॥
वरेण च्छन्दयामास सर्वलोकपितामहः ।
ततः सुन्दोपसुन्दौ तौ भ्रातरौ दृढविक्रमौ ॥१८॥

दृष्ट्वा पितामहं देवं तस्थतुः प्राञ्जली तदा ।
ऊचतुश्च प्रभुं देवं ततस्तौ सहितौ तदा ॥१९॥
आवयोस्तपसानेन यदि प्रीतः पितामहः ।
मायाविदावस्त्रविदौ बलिनौ कामरूपिणौ ॥२०॥
उभावप्यमरौ स्याव प्रसन्नो यदि नौ प्रभुः ॥२१॥

॥ब्रह्मोवाच॥

ऋते ऽमरत्वं युवयोः सर्वमुक्तं भविष्यति ।
अन्यद्वृणीतं मृत्योश्च विधानममरैः समं ॥२२॥
प्रभविष्याव इति यन्महदत्यद्भुतं तपः ।
युवयोर्हेतुनानेन नामरत्वं विधीयते ॥२३॥
त्रैलोक्यविजयार्थाय भवद्भ्यामास्थितं तपः ।
हेतुनानेन दैत्येन्द्रौ न वां कामं करोम्यहं ॥२४॥

॥सुन्दोपसुन्दावूचतुः॥

त्रिषु लोकेषु यद्भूतं किंचित् स्थावरजङ्गमं ।
सर्वस्मान्नौ भयं न स्यादृते ऽन्योन्यं पितामह ॥२५॥

॥पितामह उवाच॥

यत् प्रार्थितं यथोक्तं च काममेतद्ददानि वां ।
मृत्योर्विधानमेतच्च यथावद्वां भविष्यति ॥२६॥

॥नारद उवाच॥

ततः पितामहो दत्वा वरमेतं तथा तयोः ।
निवर्त्य तपसश्चैव ब्रह्मलोकं जगाम ह ॥२७॥
लब्ध्वा वराणि दैत्येन्द्रावथ तौ भ्रातरावुभौ ।
अबध्यौ सर्वलोकस्य स्वमेव भवनं गतौ ॥२८॥
तौ तु लब्धवरौ दृष्ट्वा कृतकामौ मनस्विनौ ।
सर्वः सुहृज्जनस्ताभ्यां प्रहर्षमुपजग्मिवान् ॥२९॥
ततस्तौ तु जटा भित्वा मौलिनौ संबभूवतुः ।
महार्हाभरणोपेतौ विरजोऽम्बरधारिणौ ॥३०॥
अकालकौमुदीं चैव चक्रतुः सर्वकामिनीं ।
नित्यप्रमुदितः सर्वस्तयोश्चैव सुहृज्जनः ॥३१॥
भक्ष्यतां भुज्यतां चैव दीयतां रम्यतामिति ।
पीयतां गीयतां चेति शब्द आसीद्गृहे गृहे ॥३२॥
तत्र तत्र महानादैरुत्कृष्टतलनादितैः ।
हृष्टं प्रमुदितं सर्वं दैत्यानामभवत् पुरं ॥३३॥
तैस्तैर्विहारैर्बहुभिर्दैत्यानां कामरूपिणां ।
समाः संक्रीडतां तेषामहरेकमिवाभवत् ॥३४॥

॥इति सुन्दोपसुन्दोपाख्याने प्रथमः सर्गः ॥१॥

## ॥नारद उवाच॥

उत्सवे वृत्तमात्रे तु त्रैलोक्यकाङ्क्षिणावुभौ ।
मन्त्रयित्वा ततः सेनां तावाज्ञापयतां तदा ॥१॥
सुहृद्भिः समनुज्ञातौ दैत्यवृद्धैश्च मन्त्रिभिः ।
कृत्वा प्रस्थानिकं रात्रौ मघासु ययतुस्तदा ॥२॥
गदापट्टिशधारिण्या शूलमुद्गरहस्तया ।
प्रस्थितौ सह धर्मिण्या महत्या दैत्यसेनया ॥३॥
मङ्गलैः स्तुतिभिश्चापि विजयप्रतिसंहितैः ।
चारणैः स्तूयमानौ तौ जग्मतुः परया मुदा ॥४॥
तावन्तरिक्षमुत्पत्य दैत्यौ कामगमावुभौ ।
देवानामिव भवनं जग्मतुर्युधदुर्मदौ ॥५॥
तयोरागमनं ज्ञात्वा वरदानं च तत् प्रभोः ।
हित्वा त्रिपिष्टपं जग्मुर्ब्रह्मलोकं ततः सुराः ॥६॥
ताविन्द्रलोकं निर्जित्य यक्षरक्षोगणांस्ततः ।
खेचराण्यपि भूतानि जघ्नतुस्तीव्रविक्रमौ ॥७॥
अन्तर्भूमिगतान् नागान् जित्वा तौ च महारथौ ।
समुद्रवासिनीः सर्वा म्लेच्छजातीर्विजिग्यतुः ॥८॥

ततः सर्वां महीं जेतुमारब्धावुग्रशासनौ ।
सैनिकांश्च समाहूय सुतीक्ष्णं वाक्यमूचतुः ॥९॥
राजर्षयो महायज्ञैर्हव्यकव्यैर्द्विजातयः ।
तेजो बलं च देवानां वर्द्धयन्ति श्रियं तथा ॥१०॥
तेषामेवं प्रवृत्तानां सर्वेषामसुरद्विषां ।
संभूय सर्वैरस्माभिः कार्यः सर्वात्मना बधः ॥११॥
एवं सर्वान् समादिश्य पूर्वे तीरे महोदधेः ।
क्रूरां मतिं समास्थाय जग्मतुः सर्वतोमुखौ ॥१२॥
यज्ञैर्यजन्ति ये केचिद्याजयन्ति च ये द्विजाः ।
तान् सर्वान् प्रसभं हत्वा बलिनौ जग्मतुस्ततः ॥१३॥
आश्रमेष्वग्निहोत्राणि मुनीनां भावितात्मनां ।
गृहीत्वा प्रक्षिपन्त्यप्सु विश्रब्धं सैनिकास्तयोः ॥१४॥
तपोधनैश्च यैः क्रुद्धैः शापा उक्ता महात्मभिः ।
नाक्रमन्त तयोस्ते ऽपि वरदाननिराकृताः ॥१५॥
नाक्रमन्त यदा शापा बाणा मुक्ताः शिलास्विव ।
नियमांस्ते परित्यज्य व्यद्रवन्त द्विजातयः ॥१६॥
पृथिव्यां ये तपःसिद्धा दान्ताः शमपरायणाः ।
तयोर्भयाद्दुद्रुवुस्ते वैनतेयादिवोरगाः ॥१७॥
मथितैराश्रमैर्भग्नैर्विशीर्णकलसैः स्रुवैः ।
शून्यमासीज्जगत् सर्वं कालेनेव हतं तदा ॥१८॥

राजर्षिभिरदृश्यद्भिर्ऋषिभिश्च महासुरौ ।
उभौ विनिश्चयं कृत्वा विकुर्वाते वधैषिणौ ॥१९॥
प्रभिन्नकरटौ मत्तौ भूत्वा कुञ्जररूपिणौ ।
संलीनमपि दुर्गेषु निन्यतुर्यमसादनं ॥२०॥
सिंहौ भूत्वा पुनर्व्याघ्रौ पुनश्चान्तर्हितावुभौ ।
तैस्तैरुपायैस्तौ क्रूरावृषीन् दृष्ट्वा निजघ्नतुः ॥२१॥
निवृत्तयज्ञस्वाध्याया प्रणष्टनृपतिद्विजा ।
उत्सन्नोत्सवयज्ञा च बभूव वसुधा तदा ॥२२॥
हाहाभूता भयार्त्ता च निवृत्तविपणापणा ।
निवृत्तदेवकार्या च पुण्योद्वाहविवर्जिता ॥२३॥
निवृत्तकृषिगोरक्षा विध्वस्तनगराश्रमा ।
अस्थिकङ्कालसंकीर्णा भूर्बभूवोग्रदर्शना ॥२४॥
जगत् प्रतिभयाकारं दुष्प्रेक्ष्यं चाभवत् तदा ।
चन्द्रादित्यौ ग्रहास्तारा नक्षत्राणि दिवौकसः ।
जग्मुर्विषादं तत् कर्म दृष्ट्वा सुन्दोपसुन्दयोः ॥२५॥
एवं सर्वा दिशो दैत्यौ जित्वा क्रूरेण कर्मणा ।
निःसपत्नौ कुरुक्षेत्रे निवेशमभिचक्रतुः ॥२६॥
इति सुन्दोपसुन्दोपाख्याने द्वितीयः सर्गः ॥२॥



॥नारद उवाच॥

ततो देवर्षयः सर्वे सिद्धाश्च परमर्षयः ।
जग्मुस्ततः परमार्त्तिं दृष्ट्वा तत् कदनं महत् ॥१॥
ते ऽपि जग्मुर्जितक्रोधा जितात्मानो जितेन्द्रियाः ।
पितामहस्य भवनं जगतः कृपया तदा ॥२॥
ततो ददृशुरासीनं सह देवैः पितामहं ।
सिद्धैर्ब्रह्मर्षिभिश्चैव समन्तात् परिवारितं ॥३॥
तत्र देवो महादेवस्तत्राग्निर्वायुना सह ।
चन्द्रादित्यौ च शक्रश्च परमेष्ठ्यास्तथर्षयः ॥४॥
वैखानसा बालखिल्या वानप्रस्था मरीचिपाः ।
अजाश्चैव विमूढाश्च तेजोगर्भास्तपस्विनः ॥५॥
ऋषयः सर्व एवैते पितामहमुपागमन् ।
ततो ऽभिगम्य ते दीनाः सर्व एव महर्षयः ॥६॥
सुन्दोपसुन्दयोः कर्म सर्वमेव शशंसिरे ।
यथा कृतं यादृशं च कृतं येन क्रमेण च ॥७॥
न्यवेदयंस्ततः सर्वमखिलेन पितामहं ।
ततो देवगणाः सर्वे ते चैव परमर्षयः ॥८॥

तमिवार्थं पुरस्कृत्य पितामहमचोदयन् ।
ततः पितामहः श्रुत्वा सर्वेषां तद्वचस्तदा ॥९॥
मुहूर्तमिव संचिन्त्य कर्तव्यस्य विनिश्चयं ।
तयोर्बधं समुद्दिश्य विश्वकर्माणमह्वयत् ॥१०॥
दृष्ट्वा च विश्वकर्माणं व्यादिदेश पितामहः ।
सृज्यतां प्रार्थनीयैका प्रमदेति महातपाः ॥११॥
पितामहं नमस्कृत्य तद्वाक्यमभिनन्द्य च ।
निर्ममे योषितं दिव्यां चिन्तयित्वा पुनः पुनः ॥१२॥
त्रिषु लोकेषु यत् किंचित् भूतं स्थावरजङ्गमं ।
समानयद्दर्शनीयं तत् तदत्र स विश्वकृत् ॥१३॥
कोटिशश्चैव रत्नानि तस्या गात्रे न्यवेशयत् ।
तां रत्नसंघातमयीमसृजद्देवरूपिणीं ॥१४॥
सा प्रयत्नेन महता निर्मिता विश्वकर्मणा ।
त्रिषु लोकेषु नारीणां रूपेणाप्रतिमाभवत् ॥१५॥
न तस्याः सूक्ष्ममप्यस्ति यद्गात्रे रूपसंपदा ।
नियुक्ता यत्र वा दृष्टिर्न सज्जति दिवौकसां ॥१६॥
सा विग्रहवतीव श्रीः कामरूपा वपुष्मती ।
जहार सर्वभूतानां चक्षूंषि च मनांसि च ॥१७॥
तिलं तिलं समानीय रत्नानां यद्विनिर्मिता ।
तिलोत्तमेति तत् तस्या नाम चक्रे पितामहः ॥१८॥

ब्रह्माणं सा नमस्कृत्य प्राञ्जलिर्वाक्यमब्रवीत् ।
किं कार्यं मयि भूतेश येनास्म्यद्येह निर्मिता ॥१९॥

॥पितामह उवाच॥

गच्छ सुन्दोपसुन्दाभ्यामसुराभ्यां तिलोत्तमे ।
प्रार्थनीयेन रूपेण कुरु भद्रे प्रलोभनं ॥२०॥
त्वत्कृतदर्शनादेव रूपसंपत्कृतेन वै ।
विरोधः स्याद्यथा ताभ्यामन्योन्येन तथा कुरु ॥२१॥

॥नारद उवाच॥

सा तथेति प्रतिज्ञाय नमस्कृत्य पितामहं ।
चकार मण्डलं तत्र विबुधानां प्रदक्षिणं ॥२२॥
प्राङ्मुखो भगवानास्ते दक्षिणेन महेश्वरः ।
देवाश्चैवोत्तरेणासन् सर्वतस्त्वृषयोऽभवन् ॥२३॥
कुर्वत्या तु तया तत्र मण्डलं तत्प्रदक्षिणं ।
इन्द्रः स्थाणुश्च भगवान् धैर्येण प्रत्यवस्थितौ ॥२४॥
द्रष्टुकामस्य चात्यर्थं गतया पार्श्वतस्तया ।
अन्यदञ्चितपत्राक्षं दक्षिणं निःसृतं मुखं ॥२५॥
पृष्ठतः परिवर्तिन्या पश्चिमं निःसृतं मुखं ।
गतया चोत्तरं पार्श्वमुत्तरं निःसृतं मुखं ॥२६॥

महेन्द्रस्यापि नेत्राणां पृष्ठतः पार्श्वतो ऽग्रतः ।
रक्तान्तानां विशालानां सहस्रं सर्वतो ऽभवत् ॥२७॥
एवं चतुर्मुखः स्थानुर्महादेवो ऽभवत् पुरा ।
तथा सहस्रनेत्रश्च बभूव बलसूदनः ॥२८॥
तथा देवनिकायानां महर्षीणां च सर्वशः ।
मुखानि चाभ्यवर्तन्त येन याता तिलोत्तमा ॥२९॥
तस्या गात्रे निपतिता तेषां दृष्टिर्महात्मनां ।
सर्वेषामेव भूयिष्ठमृते देवं पितामहं ॥३०॥
गच्छन्त्या तु तया सर्वे देवाश्च परमर्षयः ।
कृतमित्येव तत् कार्यं मेनिरे रूपसंपदा ॥३१॥
तिलोत्तमायां तस्यां तु गतायां लोकभावनः ।
सर्वान् विसर्जयामास देवानृषिगणांश्च तान् ॥३२॥
॥इति सुन्दोपसुन्दोपाख्याने त्रितीयः सर्गः ॥३॥



## ॥नारद उवाच॥

जित्वा तु पृथिवीं दैत्यौ निःसपत्नौ गतव्यथौ ।
कृत्वा त्रैलोक्यमव्यग्रं कृतकृत्यौ बभूवतुः ॥१॥
देवगन्धर्वयक्षाणां नागपार्थिवरक्षसां ।
आदाय सर्वरत्नानि परां तुष्टिमुपागतौ ॥२॥
यदा न प्रतिषेद्धारस्तयोः सन्तीह केचन ।
निरुद्योगौ तदा भूत्वा विजह्रातेऽमराविव ॥३॥
स्त्रीभिर्माल्यैश्च गन्धैश्च भक्षैर्भोज्यैः सुपुष्कलैः ।
पानैश्च विविधैर्हृद्यैः परां प्रीतिमवापतुः ॥४॥
अन्तःपुरवनोद्याने पर्वतेषु वनेषु च ।
यथेप्सितेषु देशेषु विजह्रातेऽमराविव ॥५॥
ततः कदाचिद्विन्ध्यस्य प्रस्थे समशिलातले ।
पुष्पिताग्रेषु शालेषु विहारमभिजग्मतुः ॥६॥
दिव्येषु सर्वकाम्येषु समानीतेषु तत्र वै ।
वरासनेषु संहृष्टौ सह स्त्रीभिर्निषेदतुः ॥७॥
ततो वादित्रनृत्याभ्यामुपातिष्ठन्त तौ स्त्रियः ।
गीतैश्च स्तुतिसंयुक्तैः प्रीत्या समुपजग्मिरे ॥८॥

ततस्तिलोत्तमा तत्र वने पुष्पाणि चिन्वती ।
वेषं साक्षिप्तमाधाय रक्तेनैकेन वाससा ॥ ९ ॥
नदीतीरेषु जातान् सा कर्णिकारान् प्रचिन्वती ।
शनैर्जगाम तं देशं यत्रास्तां तौ महासुरौ ॥ १० ॥
तौ च पीत्वा वरं पानं मदरक्तान्तलोचनौ ।
दृष्ट्वैव तां वरारोहां व्यथितौ संबभूवतुः ।
तावुत्थायासनं हित्वा जग्मतुर्यत्र सा स्थिता ॥ ११ ॥
उभौ च कामसंमत्तावुभौ प्रार्थयतश्च तां ।
दक्षिणे तां करे सुभ्रुं सुन्दो जग्राह पाणिना ॥ १२ ॥
उपसुन्दो ऽपि जग्राह वामे पाणौ तिलोत्तमां ।
वरप्रदानमत्तौ तावौरसेन बलेन च ॥ १३ ॥
धनरत्नमदाभ्यां च सुरापानमदेन च ।
सर्वैरेतैर्मदैर्मत्तावन्योन्यं भृकुटीमुखौ ॥ १४ ॥
मदकामसमाविष्टौ परस्परमथोचतुः ।
मम भार्या तव गुरुरिति सुन्दो ऽभ्यभाषत ॥ १५ ॥
मम भार्या तव वधूरुपसुन्दो ऽभ्यभाषत ।
नैष तव ममैषेति तत्र तौ मन्युराविशत् ॥ १६ ॥
तस्या रूपेण संमत्तौ विगतस्नेहसौहृदौ ।
तस्या हेतोर्गदे भीमे संगृह्णीतामुभौ तदा ॥ १७ ॥

प्रगृह्य च गदे भीमे तस्याः कामेन मोहितौ ।
अहं पूर्वमहं पूर्वमित्यन्योन्यं निजघ्नतुः ॥१८॥
तौ गदाभिर्हतौ भीमौ पेततुर्धरणीतले ।
रुधिरेणावसिक्ताङ्गौ द्वाविवार्कौ नभश्च्युतौ ॥१९॥
ततस्ता विद्रुता नार्यः सहदैत्यगणास्तदा ।
पातालमगमन् सर्वा विषादभयकम्पिताः ॥२०॥
ततः पितामहस्तत्र सह देवैर्महर्षिभिः ।
आजगाम विशुद्धात्मा पूजयिष्यंस्तिलोत्तमां ॥२१॥
वरेण छन्दयामास भगवान् प्रपितामहः ।
वरयामास तत्रैषा लोकांस्तेजोमयान् शुभान् ॥२२॥
भगवानथ तां शुभ्रं प्रीतः प्राह पितामहः ।
वरदित्सुः स तत्रैनां प्रीतः प्राह पितामहः ॥२३॥
आदित्यचरितांल्लोकान् विचरिष्यसि भाविनि ।
तेजसा च सुदृष्टां त्वां न करिष्यति कश्चन ॥२४॥
एवं तस्यै वरं दत्वा सर्वलोकपितामहः ।
इन्द्रे त्रैलोक्यमाधाय ब्रह्मलोकं गतः प्रभुः ॥२५॥

इति चतुर्थः सर्गः ॥४॥

॥सुन्दोपसुन्दोपाख्यानं समाप्तं॥

